(ख) पूर्णवाक्येन उत्तरयत

(अ) गोपालेन कथं गावः पालिताः आसन् ?

(आ) गोमती गवां वासस्थानाद् किम् अपाकरोति स्म ?

(इ) गोपालः कदा गोसेवायां संलग्नो भवति स्म ?

(ग) भाषिककार्य कुरुत

(अ) "अन्नेन" इत्यस्य विशेषणपदं किम् ?

(आ) "स्वसन्ततिषु इव" इत्यत्र का सन्धिर्जायते ? सन्धिगतं रूपं च किम् ?

(इ) "ईषद एन" इत्यस्य सन्धिविच्छेदं कुरुत ।

(ई) "गोषु" इत्यस्य एकवचने किं रूपं भवति ?

(उ) "अपि" इत्यस्य प्रयोगं कृत्वा वाक्यमेकं रचयत ।

(ऊ) "भोजयति स्म" इत्यस्य अर्थः कः ?

(घ) गोमती कथं गोसेवां करोति स्म ? चतुर्भिः वाक्यैः वर्णयत ।

८. अधस्तनं श्लोकं सलयं पठत तदनु तद्भावार्थं पठित्वा स्वभाषायां सत्पुरुषस्य परिचयम् उपस्थापयत

९. अधस्तनमनुच्छेदं पठित्वा प्रश्नान् उत्तरयत

श्लाघ्यः स एको भुवि मानवानाम्,
स उत्तमः सत्पुरुषः स धन्यः ।
यस्यार्थिनो वा शरणागता वा
नाशाविभङ्गा विमुखाः प्रयान्ति ॥

भावार्थः- यस्य सम्मुखं प्राप्य शरणागताः याचकाश्च विमुखाः न प्रत्यावर्तन्ते, येषां सम्मुखे शरणागतानां याचकानां च आशाः पूर्णाः भवन्ति, स एव जनः संसारे उत्तमः कथ्यते, स एव जनः सत्पुरुषः अस्ति, स एव च जनः सर्वेषां धन्यवादम् अर्हति ।

जसका अगाडि पुगेर शरणमा परेका व्यक्ति र माग्नेहरू त्यसै फर्कँदैनन्, जसका सम्मुखमा शरणमा परेका र माग्नेहरूको आशा पूर्ण हुन्छ, त्यही मानिस नै उत्तम मानिस हो, त्यही नै असल मानिस हो र त्यही मानिस नै सबैको धन्यवादको पात्र हो ।

आधुनिक गाईगोठ, जसमा केही कामदारहरू काम गरिरहेका छन् ।

डडुवाग्रामे शङ्करः नेपाली निवसति । तस्य पिता भूमिहीनः आसीत् । अतः सः अन्येषां गृहेषु गत्वा कार्यं करोति स्म । दुःखं कृत्वापि स पुत्रं सम्यग् अध्यापितवान् आसीत् । पठने शङ्करः अपि व्युत्पन्नः आसीत् । स पठने कक्षायाः सर्वान् अतिशेते स्म । विद्यालयतः शङ्करः प्रतिकार्यक्रमं प्रतिपरीक्षं च पुरस्कारम् आनयति स्म । स्वेदबिन्दून् प्रोञ्छ्य तस्य पिता स्मितमुखेन पुत्राय धन्यवादं ददाति स्म । तस्य सखायः तस्य पठनं दृष्ट्वा विस्मिताः भवन्ति स्म । शङ्करः प्रवेशिकां परीक्षां प्रथमश्रेण्याम् उत्तीर्णवान् । तस्य सखायः केचित् चिकित्साविज्ञानम् अधीतवन्तः, केचिद् आधुनिकं वास्तुविज्ञानं पठितवन्तः परं पितुः धनाभावे व्युत्पन्नः अपि शङ्करः तादृशं विषयं पठितुम् असमर्थः अभवत् । अतः स सर्वकारीये विद्यापीठे ग्रामीणविकासविषयम् अधीतवान् ।

अध्ययनं समाप्य सखायः विदेशम् अगच्छन् । स तु स्वदेशे एव स्थित्वा किमपि कर्तुम् इच्छति स्म । अतः स विदेशं नागच्छत् । स ग्रामं प्रत्यागच्छत् । स ग्रामस्य एव कस्मिँश्चित् संस्थागते विद्यालये छात्रान् अध्यापयितुम् आरभत । अध्यापनम् अन्तरा स ग्रामे अपरस्य भूमिं वेतने स्वीकृत्य गोष्ठं निर्माय गाः अपि पालयितुम् आरभत । "एतावत् पठित्वा अपि गोपालनं करोति एषः । एतस्य पठनस्य प्रयोजनं किम् अभवत् ?" इति कथयित्वा ग्रामीणाः तस्य उपहासम् अकुर्वन् । अन्येषां वचने ध्यानम् अदत्त्वा एव स कार्यम् अकरोत् । स गोपालने आधुनिकं प्रविधिं प्रायुङ्क्त । दुग्धे कदापि जलमिश्रणं न अकरोत् । शुद्धं दुग्धं प्राप्यते इति विचार्य जनाः तस्य गृहम् एव आगत्य दुग्धं नयन्ति स्म । दुग्धेन, दध्ना, घृतेन, अन्यैः दुग्धजन्यैः वस्तुभिश्च सः अधिकं धनम् आर्जयत् । अधुना स भूमिं क्रीत्वा अधुना स्वस्यैव भूमौ गोष्ठं निर्मितवान् अस्ति । अधुना तस्य गोष्ठे शताधिकाः गावः सन्ति । विंशतिः कर्मकराः तस्य गोष्ठे कार्यं कुर्वन्ति । ग्रामस्य आपणक्षेत्रे शङ्करस्य विशालं गृहम् अस्ति । गृहे तेन स्वस्य एव दुग्धजन्यानां पदार्थानाम् उद्योगः सञ्चालितः अस्ति । काष्ठमण्डपे अपि तस्य एकं गृहं वर्तते । काष्ठमण्डपस्य उत्कृष्टे विद्यालये शङ्करस्य पुत्री अधीयाना अस्ति । स स्वपुत्रीं चिकित्साविषयम् अध्याप्य स्वस्य

अपूर्णाम् इच्छां पूरयितुम् इच्छति । शङ्करस्य समुन्नतिं दृष्ट्वा अन्ये अपि द्वित्राः ग्रामीणाः ग्रामे गोपालनम् आरब्धवन्तः सन्ति । श्रूयते, शङ्करस्य सहपाठी आधुनिकवास्तुशास्त्री प्रवीणः, यः अमेरिकादेशं गतवान् आसीत्, यः ग्रामस्य एव भूमिपतेः पुत्रः अस्ति, यस्य गृहे शङ्करस्य पिता कार्यं करोति स्म, सः अपि नेपालं प्रत्यावृत्त्य शङ्करस्य व्यवसाये साहचर्यं कर्तुम् इच्छति ।

डडुवा गाउँमा शङ्कर नेपाली बस्छन् । तिनका पिता भूमिहीन थिए । त्यसैले उनी अरूका घरमा गएर काम गर्दथे । दुःख गरेर पनि उनले छोरालाई राम्रोसँग पढाएका थिए । पढाइमा शङ्कर तगडा थिए । उनी पढाइमा कक्षाका सबैलाई जित्थे । विद्यालयबाट हरेक कार्यक्रममा र हरेक परीक्षामा उनी पुरस्कार ल्याउँथे । पसिना पुछ्दै उनका पिता हँसिलो मुखले उनलाई धन्यवाद दिन्थे । उनका साथीहरू उनको पढाइ देखेर दङ्ग पर्दथे । शङ्करले प्रवेशिका परीक्षा प्रथम श्रेणीमा उत्तीर्ण गरे । उनका साथीहरू कसैले डाक्टरी र कसैले इन्जिनियरिङ पढे तर पितासँग धनको अभाव भएका कारण शङ्करले त्यस्ता विषय पढ्न पाएनन् । उनले सरकारी क्याम्पसमा ग्रामीण विकास विषय पढे ।

पढाइ सकेपछि उनका साथीहरू विदेश गए । उनी चाहिँ स्वदेशमै बसेर केही गर्न चाहन्थे । त्यसकारण उनी विदेश गएनन् । उनी गाउँ फर्किए । गाउँकै कुनै निजी विद्यालयमा उनी विद्यार्थीहरूलाई पढाउन थाले । अध्यापनबाहेक उनी गाउँमा अर्काको जग्गा भाडामा लिएर गोठ बनाई गाई पाल्न थाले । 'यति पढेर पनि यो गाई पाल्छ । यसको पढाइ के काम ?' भनेर गाउँलेहरूले उनको उपहास गरे । अरूको कुरामा ध्यान नदिई उनी काम गरिरहे । उनले गाईपालनमा आधुनिक प्रविधिको प्रयोग गरे । दुधमा कहिल्यै पानी मिसाएनन् । शुद्ध दुध पाइन्छ भनेर मानिसहरू उनको घरैमा आएर दुध लैजान्थे । दुध, दही, घिउ र अन्य दुग्धजन्य वस्तुहरूबाट उनले धेरै धन कमाए । अहिले उनले जग्गा किनेर आफ्नै जग्गामा गोठ बनाएका छन् । अहिले उनको गोठमा सयभन्दा बढी गाई छन् । बीस कर्मचारी उनका गोठमा काम गर्छन् । गाउँकै बजारमा उनको ठूलो घर छ । घरैमा उनले दुग्धजन्य पदार्थहरूको उद्योग चलाएका छन् । काठमाडौँमा पनि उनको एउटा घर छ । काठमाडौँको उत्कृष्ट विद्यालयमा शङ्करकी छोरी पढ्दैछिन् । उनी आफ्नी छोरीलाई डाक्टरी पढाएर आफ्नो अपूर्ण चाहना पूरा गर्न चाहन्छन् । शङ्करको समुन्नति देखेर

अरू दुई तीन जना गाउँलेअरूले पनि अहिले गाउँमा गाई पाल्न थालेका छन् । सुनिन्छ, शङ्करका सहपाठी इन्जिनियर प्रवीण, जो अमेरिका गएका थिए, जो गाउँकै जमिनदारका छोरा थिए, जसका घरमा शङ्करका पिता काम गर्दथे, ऊ पनि नेपाल फर्किएर शङ्करको व्यवसायमा साझेदारी गर्न चाहन्छ ।

(क) एकवाक्येन उत्तरयत

(अ) शङ्करः नेपाली कस्मिन् ग्रामे निवसति ?

(आ) पठने शङ्करः कीदृशः आसीत् ?

(इ) शङ्करस्य पिता शङ्कराय कथं धन्यवादं ददाति स्म ?

(ई) कस्यां श्रेण्यां शङ्करः प्रवेशिकाम् उत्तीर्णवान् ?

(उ) शङ्करः उच्चशिक्षायां कं विषयम् अधीतवान् ?

(ए) शङ्करः किमर्थं विदेशं नागच्छत् ?

(ऐ) शङ्करः कुत्र गाः पालयितुम् आरभत ?

(ओ) किमर्थं जनाः शङ्करस्य गृहे एव आगत्य दुग्धं नयन्ति स्म ?

(औ) शङ्करः कैः अधिकं धनम् आर्जयत् ?

(अं) शङ्करः कथं स्वस्य अपूर्णाम् इच्छां पूरयितुम् इच्छति ?

(अः) कः शङ्करस्य व्यवसाये साहचर्यं कर्तुम् इच्छति ?

(ख) शङ्करः कीदृशः अस्ति ? स्वभाषायां कथयत ।

(ग) यूयं शङ्करस्य गोपालनस्य निर्णयं समुचितं मन्यध्वे उत अनुचितम् ? सकारणं कथयत ।

(घ) गोपालनव्यवसायस्य लाभानां सूची निर्मात ।

१०. पाठस्य समग्रां कथां पठित्वा गोसेवायाः महत्त्वं स्वशब्दैः उपस्थापयत ।

## लेखनम्

१. अधस्तनानां पदानाम् अभ्यासपुस्तिकायां पुनर्लेखनं कुरुत ।

संयोज्य, स्वसन्तितषु, विक्रयेण, नन्दनचन्दनौ, स्वल्पाकारा, निकटवर्तिनीम्, अन्नोत्पादनम्, वर्षद्वयाभ्यन्तरे, अकर्मण्यताम्, अवाबोधयताम् ।

२. अधस्तनानि पदानि शुद्धानि कृत्वा लिखत

कृशकः, कार्येषू, पीष्टम्, शरिरेभ्यः, स्वसन्ततिसु, तादृषस्य, ध्रितम्, उर्वरा, स्वीकरोती, अनीच्छायाम्, बिभक्ता, सरनिम्, समिचीनम्, वीपरीता, कृषताम्, दिनताम्, प्रफुल्लम्, अश्रुणि, पस्यन्ती ।

३. अधस्तनानां पदानां पाठानुकूलमर्थं लिखत

ईषद्, जीवनवृत्तिः, विक्रीणीते, शयित्वा, मिलित्वा, निकटवर्तिनी, अक्रीणात्, परिश्रमेण ।

४. अधस्तनानां पदानां प्रयोगेण प्रतिपदमेकं मौलिकं वाक्यं रचयत

कृषकः, एव, संयोज्य, दशन्ति, तत्क्रम्, प्रयोगेण, शयित्वा, रुष्टः, ऐच्छत्, कदापि, सम्यक्, अभावे, दृष्ट्वा, अस्माकम्, भवितुम्, गोष्ठे, पुरः ।

५. पाठस्य चतुर्थस्यानुच्छेदस्य श्रुतलेखनं कुरुत ।

६. पाठस्य सप्तमानुच्छेदसम्बद्धान् अधस्तनान् प्रश्नान् उत्तरयत

(क) कः केन सह विवादम् अकरोत् ?

(ख) भूमिः कथं स्वल्पाकारा जाता ?

(ग) कति गाः चन्दनः अनयत् ?

(घ) नन्दनः कुत्र स्थातुम् ऐच्छत् ?

(ङ) चन्दनः कुत्र स्थातुम् इच्छति स्म ?

(च) कियत्समयं यावत् चन्दनः अग्रजस्य गृहे नागच्छत् ?

(छ) चन्दनस्य व्यवहारेण कौ विस्मितौ अभवताम् ?

(ज) "अनिच्छायाम्" इति पदस्य विभक्तिवचने के ?

(झ) "सहर्षम्" इत्यस्य अर्थः कः ?

(ञ) "अक्रीणात्" इति क्रियापदस्य कालनिर्देशं कुरुत ।

(ट) "सहैव" "गृहेऽपि" "कदापि" एतेषां सन्धिविच्छेदं कुरुत ।

(ठ) "विभक्ता अभवत्" "पार्श्वे अतिष्ठन्" "एव ईषद्" इत्येषां सन्धिगतानि रूपाणि लिखत ।

७. एकपदेन उत्तरयत

(क) का गृहस्य कार्याणि समाप्य पत्युः कार्येषु सहयोगं करोति स्म ?

(ख) नन्दनचन्दनयोः पत्न्यौ कीदृश्यौ आस्ताम् ?

(ग) चन्दनस्य भूमिः कीदृशी आसीत् ?

(घ) कियद्वर्षानन्तरं नन्दनचन्दनयोः मेलनम् अभवत् ?

(ङ) चन्दनस्य अवस्थया कौ दुःखितौ अभवताम् ?

(च) केन अस्माकं मानो वर्धते ?

८. पूर्णवाक्येन उत्तरयत

(क) केन कारणेन गोमतीगोपालयोः परिवारः स्वस्थः आसीत् ?

(ख) किमर्थं पित्रोः सम्पत्तिः भागद्वये विभक्ता अभवत् ?

(ग) चन्दनः कुत्र गृहं निरमापयत् ?

(ङ) नन्दनः कथं क्षेत्रेषु कार्यम् अकरोत् ?

(च) नन्दनस्य पत्नी कथं कार्यं करोति स्म ?

(छ) किमर्थं चन्दनः अवनतेः मार्गे अगच्छत् ?

(ज) चन्दनः कां प्रति पश्चात्तापम् अकरोत् ?

(झ) कीदृश्यः गावः अस्मभ्यं बहु दुग्धं ददति ?

(ञ) कः कथं कर्मयोगं शिक्षयति स्म ?

(ट) कस्य निरन्तरं प्रगतिः भवति ?

(ठ) चन्दनः पत्न्याः पुरः कीदृशी प्रतिज्ञाम् अकरोत् ?

९. कथायाः सन्देशः कः ? पञ्चभिः वाक्यैः लिखत ।

१०. नन्दनचन्दनयोः मध्ये युष्मभ्यं कः अरोचत ? किमर्थम् ?

११. रिक्तस्थाने उपयुक्तानि पदानि लिखत

(क) नन्दनस्य माता ........ आसीत् ।

(ख) गोमतीगोपालौ दध्ना .......... उत्पादयतः स्म ।

(ग) यात्रोः परस्परं ........ आसीत् र

(घ) चन्दनः अग्रजस्य निर्देशानुसारेण ......... कर्तुं न शक्नोति स्म ।

(ङ) नन्दनस्य पार्श्वे ......... गावः अतिष्ठन् ।

(च) ........... पत्युः सर्वेषु कार्येषु सहयोगं करोति स्म ।

(छ) चन्दनस्य गृहे धनार्जनस्य मार्ग एव .......... अभवत् ।

(ज) ........... अस्माकं माता अस्ति ।

(झ) ........... सर्वे तिरस्कुर्वन्ति ।

१२. पाठस्य षष्ठम् अनुच्छेदमाधृत्य परस्परं मेलयत

| समूहः 'क' | समूह : 'ख' |
|---|---|
| गोमतीगोपालौ | युवानौ |
| नन्दनचन्दनौ | सुशीले |
| पत्न्यौ | वृद्धौ |

तिक्तम्, कृशौ, असहयोगम्, सदैव, दूरे, प्रारभ्य, स्वच्छम्, पुष्टिहीनम्, क्रयेण, अस्वस्थः, अधिकम्, अलग्ना, कदाचित्, अपर्याप्तम्

१३. पाठस्य प्रथम-द्वितीय-तृतीयानुच्छेदेभ्यः केष्ठस्थपदानां विपरीतार्थकपदानि सङ्कलय्य लिखत

तिक्तम्, कृशौ, असहयोगम्, सदैव, दूरे, प्रारभ्य, स्वच्छम्, पुष्टिहीनम्,

| क्रयेण, अस्वस्थः, अधिकम्, अलग्ना, कदाचित्, अपर्याप्तम् |
|---|

१४. अधस्तनं पद्यं पठित्वा सारिणीतः षड् वाक्यानि निर्मात

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणापराणां
परोपकारेण न चन्दनेन ॥

दयावान् सज्जनहरूका कान शास्त्र सुनेर विभूषित हुन्छन्, कुण्डलधारण गरेर होइन । तिनीहरूको हात दानले विभूषित हुन्छन्, बालाहरूको धारण गरेर होइन । तिनीहरूको शरीर परोपकारले नै सुशोभित हुन्छ, चन्दन दलेर होइन ।

| | | | | |
|---|---|---|---|---|
| करुणापराणां<br>सज्जनानाम् | कर्णयोः<br>हस्तयोः<br>शरीरस्य | भूषणम् | शास्त्रश्रवणम्<br>दानम्<br>परोपकारः<br>कुण्डलधारणम्<br>कङ्कणधारणम्<br>चन्दनलेपनम् | अस्ति ।<br>नास्ति । |

## व्याकरणानुशीलनम्

१. सन्धिं कुरुत

यथा- नाम्नि ईषद् = नाम्नीषद्

गृहिणी आसीत्, च अपाकरोति, पुष्टौ आस्ताम्, तर्हि अधिकान्, परिश्रमेण एव, सन्तुष्टौ आस्ताम्, पार्श्वे अतिष्ठन्, च अक्रीणात्, विपरीता आसीत्, । मातापितरौ अपि, तस्य अवस्थाम्, माता अस्ति, श्रमेण अस्माकम्, कृत्वा उपरि

२. सन्धिविच्छेदं कुरुत

कदाचिद् यूकाः, ततोऽपि, यद्यपि, तथापि, कालान्तरे, निर्देशानुसारेण, गृहेऽपि, नागच्छत्, तथैव, अन्नोत्पादनम्, सहयोगं करोति, भूमिं च, गावस्तु, सम्यग् दुग्धम्, वर्षद्वयानन्तरम्, अन्वगच्छत्, चेद् भूमिः, इत्युक्त्वा, प्रत्यागच्छत्, प्राविशत्, सम्मार्जनानन्तरम्,

३. विसर्गसन्धिसम्बद्धान् अधस्तनान् नियमान् पठत

| | [illegible] | | [illegible] | |
|---|---|---|---|---|
| | [illegible] | [illegible] | [illegible] | [illegible] |
| [illegible] | [illegible] | [illegible] | [illegible] | |

४. पाठात् पञ्चदश विच्छिन्नानि विसर्गसन्धिस्थलानि अन्विष्य उपर्यँक्तानां नियमानां विचारेण सन्धिं कृत्वा लिखत ।

५. अधोनिर्दिष्टानि कार्याणि कुरुत

(क) प्रदत्तस्य अनुच्छेदस्य रेखाङ्कितपदानां विशेषणपदानि अन्विष्य लिखत

गवां दुग्धं मधुरं पौष्टिकं च भवति । तादृशस्य गोदुग्धस्य निरन्तरं पानेन तयोः पुत्रौ पुष्टौ आस्ताम् । अवशिष्टस्य दुग्धस्य विक्रयेण तौ ईषद् धनम् अपि अर्जयतः स्म । गृहे आवश्यकानां वस्तूनां क्रयणे तद् धनं पर्याप्तम् आसीत् । तौ दुग्धसङ्कलनेन मधुरं दधि निर्मातः स्म, दध्ना च सुगन्धितं घृतम् उत्पादयतः स्म, स्वास्थ्यकरं तक्रं च निर्मातः स्म । घृतस्य तक्रस्य च सेवनेन तयोः परिवारः स्वस्थः आसीत् । कदाचित् तु तौ घृतस्य विक्रयेण अपि स्वल्पं धनम् अर्जयतः स्म ।

(ख) उपरितनानां विशेष्यपदानां विशेषणपदानां च विभक्तवचने पृथक् पृथग् लिखित्वा विचारपूर्वकम् अध्ययनेन विशेषण-विशेष्ययोः सम्बन्धः कीदृशो भवति ? स्वभाषया कथयत ।

ग) अधस्तनं पद्यं पठत, तदर्थं शिक्षकमुखात् श्रुत्वा लिखत । तदनु पद्योक्तः विशेषणविशेष्यसम्बद्धो नियमः युष्मत्कथितेन नियमेन सङ्गतिं प्रापत् न वा ? विमृशत ।

यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य ।
तल्लिङ्गं तद्वचनं सैव विभक्तिर्विशेषणस्यापि ॥

६. अधस्तनानां पदानां विभक्तिवचननिर्देशं कुरुत

उदाहरणम् -

| पदम् | विभक्तिः | वचनम् |
|---|---|---|
| नाम्नि | सप्तमी | एकवचनम् |

माता, तस्याः, अन्नेन, शरीरेषु, यूकाः, क्षेत्रस्य, गोसेवायाम्, पुत्रौ, वस्तूनाम्, दध्ना, क्षेत्रकर्षणाय, भगवते,वृषाणाम्, क्षेत्रेभ्यः, पुत्रयोः, कार्येषु, वृद्धौ, सुशीले, यात्रोः, अग्रजेन, तासाम्, अपरस्मिन्, भूमिम्, पत्युः, गोमयानाम्, कृशताम्, अवनतेः, मार्गे, अवस्थाम्, अस्माकम्, भूमिः, अस्मान्, अस्माभिः, त्वयि, सर्वे, तम् ।

७. अधस्तनानां क्रियापदानां कालपुरुषवचनानि लिखत

उदाहरणम् -

| पदम् | कालः | पुरुषः | वचनम् |
|---|---|---|---|
| पिबन्ति | वर्तमानः | प्रथमः | बहुवचनम् |

आसीत्, दशन्ति, आस्ताम्, अभवताम्, अकरोत्, अतिष्ठन्, ऐच्छत्, अपिबन्, इच्छतः, स्मः, ददति, शक्नुमः, शक्नोषि, करिष्यामि ।

८. निर्देशानुसारेण अधस्तनानां वाक्यानां वचनं परिवर्तयत

क) पुत्रौ पुष्टौ आस्ताम् । (बहुवचने)

(ख) तौ दुग्धसङ्कलनेन दधि निर्मातः । (एकवचने)

(ग) नन्दनः मातापित्रोः सरणिम् अन्वगच्छत् । (द्विवचने)

(घ) स मातापितरौ अनमत् । (बहुवचने)

(ङ) चन्दनः अग्रजेन सह विवादम् अकरोत् । (द्विवचने)

९. निर्देशानुसारेण अधस्तनानां वाक्यानां पुरुषपरिवर्तनं कुरुत

(क) सा घासान् आदाय गाः भोजयति । (उत्तमपुरुषे)

(ख) गोपालः धनं प्राप्नोति । (मध्यमपुरुषे)

(ग) चन्दनः किमपि न करोति । (उत्तमपुरुषे)

(घ) वयं गोपालाः स्मः । (प्रथमपुरुषे)

(ङ) अहं सदैव भूमेः गवां च सेवां करिष्यामि । (प्रथमपुरुषे)

१०. निर्देशानुसारेण अधस्तनानां वाक्यानां कालपरिवर्तनं कुरुत

(क) नन्दनस्य पिता कृषकः आसीत् । (वर्तमानकाले)

(ख) ते गवां रक्तं पिबन्ति । (भूतकाले)

(ग) स शयित्वा क्रीडित्वा च समयं यापयति । (भविष्यत्काले)

(घ) मातापितरौ अपि तस्य व्यवहारेण विस्मितौ अभवताम् । (वर्तमानकाले)

(ङ) वर्षद्वयाभ्यन्तरे नन्दनस्य गोष्ठे विंशतिः गावः अभवन् । (भविष्यत्काले)

११. सारिण्यां वर्तमानानि गोशब्दस्य रूपाणि पठत

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | गौः | गावौ | गावः |
| द्वितीया | गाम् | गावौ | गाः |
| तृतीया | गवा | गोभ्याम् | गोभिः |
| चतुर्थी | गवे | गोभ्याम् | गोभ्यः |
| पञ्चमी | गोः | गोभ्याम् | गोभ्यः |
| षष्ठी | गोः | गवोः | गवाम् |
| सप्तमी | गवि | गवोः | गोषु |
| सम्बोधनम् | हे गौः | हे गावौ | हे गावः |

१२. पाठे प्रयुक्तानां गोशब्दानां पदानि अन्विष्य तेषां विभक्तिवचननिर्णयं कुरुत ।

१३. अधस्तनी सारिणी पूरयत

| धातुः + प्रत्ययः | पुंलिङ्गम् | स्त्रीलिङ्गम् | नपुंसकलिङ्गम् |
|---|---|---|---|
| पठ् + क्तवतु | पठितवान् | पठितवती | पठितवत् |
| लिख् + क्तवतु | लिखितवान् | ............ | ............. |
| पत् + क्तवतु | ............ | पतितवती | ............. |
| कथ् + क्तवतु | ............ | ............. | कथतिवत् |
| हस् + क्तवतु | हसितवत् | ............. | ............. |
| जीव् + क्तवतु | ............ | जीवितवती | ............. |
| पूज् + क्तवतु | ............ | ............. | पूजितवत् |
| धाव् + क्तवतु | धावितवान् | ............ | ............. |
| क्रीड् + क्तवतु | ............ | क्रीडितवती | ............. |
| शिक्ष् + क्तवतु | ............ | शिक्षितवती | ............ |
| याच् + क्तवतु | ............ | ............ | याचितवत् |
| चल् + क्तवतु | चलितवान् | ............ | ............. |
| मिल् + क्तवतु | मिलितवान् | ............ | ............ |
| अर्ज् + क्तवतु | ............ | अर्जितवती | ............. |
| कथ् + क्तवतु | ............ | कथितवती | ............ |
| नृत् + क्तवतु | .......... | ............. | नर्तितवत् |
| यापि + क्तवतु | यापितवान् | ............ | ............ |
| गम् + क्तवतु | गतवान् | ........... | ............ |

| | | | |
|---|---|---|---|
| नम् + क्तवतु | .......... | नतवती | .......... |
| हन् + क्तवतु | .......... | .......... | हतवत् |
| मन् + क्तवतु | मतवान् | .......... | .......... |
| रम् + क्तवतु | .......... | रतवान् | .......... |
| कृ + क्तवतु | ........... | ............ | कृतवत् |
| भ” + क्तवतु | भूतवान् | ............ | ........... |
| श्रु + क्तवतु | .......... | श्रुतवती | ............. |
| ज्ञा + क्तवतु | ........... | ............ | ज्ञातवत् |
| जि + क्तवतु | जितवान् | ........... | ........... |
| नी + क्तवतु | ........... | नीतवती | ............. |
| स्मृ + क्तवतु | ........... | ........... | स्मृतवत् |
| हृ + क्तवतु | हृतवान् | ........... | ........... |
| कृ + क्तवतु | ........... | कृतवती | ........... |
| भी + क्तवतु | ........... | ........... | भीतवत् |
| क्री + क्तवतु | क्रीतवान् | ........... | ........... |
| शक् + क्तवतु | | शक्तवती | |
| दृश् + क्तवतु | .......... | ............. | दृष्टवत् |
| दश् + क्तवतु | दष्टवान् | ........... | ........... |
| सृज् + क्तवतु | ........... | सृष्टवती | ........... |
| क्रुश् + क्तवतु | ........... | ........... | क्रुष्टवत् |
| पृच्छ् + क्तवतु | पृष्टवान् | ........... | ............. |
| प्र + विश् + क्तवतु | | प्रविष्टवती | |
| इष् + क्तवतु | | | इष्टवत् |
| प्र + आप् + क्तवतु | ........... | प्राप्तवती | ........... |
| वृध् + क्तवतु | ........... | ............. | वृद्धवत् |
| लभ् + क्तवतु | लब्धवान् | ............. | ............ |
| आ + रभ् + क्तवतु | | | आरब्धवत् |
| बुध् + क्तवतु | ............. | बुद्धवती | ............. |
| पा + क्तवतु | ............ | ........... | पीतवत् |
| गै + क्तवतु | गीतवान् | ............. | ............ |
| स्था + क्तवतु | ........... | स्थितवती | ........... |

| | | | |
|---|---|---|---|
| वस् + क्तवतु | उषितवान् | ............. | ............. |
| वद् + क्तवतु | ............. | उदितवती | ............. |
| वच् + क्तवतु | ............. | ............. | उक्तवत् |
| वह् + क्तवतु | ऊढवान् | ............. | ............. |
| यज् + क्तवतु | ............. | इष्टवती | ............. |
| दा + क्तवतु | ............. | ............. | दत्तवत् |
| आ + ह्वे + क्तवतु | आहूतवान् | ............. | ............. |
| पच् + क्तवतु | ............. | पक्ववती | ............. |

१४. उदाहरणानुसारेण प्रदत्तानां क्तवतुप्रत्ययान्तानां पदानां त्रिषु लिङ्गेषु रूपाणि लिखत

उदाहरणम्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| पुंलिङ्गे | पतितवान् | पतितवन्तौ | पतितवन्तः |
| स्त्रीलिङ्गे | पतितवती | पतितवत्यौ | पतितवत्यः |
| नपुंसकलिङ्गे | पतितवत् | पतितवती | पतितवन्ति |

(क) दत्तवत् (ख) उक्तवत् (ग) इष्टवत् (घ) भीतवत् (ङ) हतवत्

(च) कथितवत् (छ) आहूतवत् (ज) पक्ववत् (झ) प्रविष्टवत् (ञ) पीतवत्

१५. अधस्तनं नियमं पठित्वा क्तवतुप्रत्ययान्तैः पदैः सामान्यभूतकाले पञ्च वाक्यानि, पूर्णपक्षे च पञ्च वाक्यानि रचयत

क्तवतुप्रत्ययान्तस्य पदस्य प्रयोगः सामान्यतया अर्थद्वये भवति । उभयत्र कर्तुः लिङ्गं वचनं च आधृत्य क्तवतुप्रत्ययान्तस्य पदस्य प्रयोगः भवति ।

प्रथमतः कर्तृवाच्ये सामान्यभूतकालिकक्रियारूपेण अपि क्तवतुप्रत्ययान्तस्य पदस्य प्रयोगः भवति । यथा- नरेशः रामायणं पठितवान् । (नरेशले रामायण पढ्यो ।)

भगिन्यौ गीतं श्रुतवत्यौ । (दुई बहिनीले गीत सुने ।)

उद्याने पुष्पाणि विकसितवन्ति । (बगैंचामा फूलहरू फुले ।)

कर्तृवाच्ये एव त्रयाणामेव कालानां पूर्णपक्षस्य वाक्यनिर्माणे अपि क्तवतुप्रत्ययान्तस्य पदस्य प्रयोगः भवति । तदनु च यथाकालम् अस्धातोः रूपाणि प्रयुज्यन्ते । यथा-

नरेशः रामायणं पठितवान् अस्ति । (नरेशले रामायण पढेको छ ।)

भगिन्यौ गीतं श्रुतवत्यौ आस्ताम् । (दुई बहिनीले गीत सुनेका थिए ।)

उद्याने पुष्पाणि विकसितवन्ति भविष्यन्ति । (बगैँचामा फूलहरू फुलेका हुनेछन् ।)

१६. पाठस्य नवमदशमानुच्छेदयोः वर्तमानानां सामान्यभूतकालिकवाक्यानां क्रियापदेषु क्तवतुप्रत्ययान्तपदानि न्यस्य तेषां वाक्यानां पुनर्लेखनं कुरुत ।

१७. निर्देशानुसारेण अधस्तनानि वाक्यानि परिवर्तयत

(क) वृक्षात् पत्रम् अपतत् । (क्तवतुप्रत्ययान्ते पदे)

(ख) शिक्षकाः सर्वं ज्ञातवन्तः सन्ति । (स्त्रीलिङ्गे)

(ग) मम पुत्रः पारितोषिकं लब्धवान् । (बहुवचने)

(घ) छात्रा कवितां लिखितवती । (पुंलिङ्गे)

(ङ) व्याघ्राः उच्चैः गर्जितवन्तः । (लङ्लकारे)

(च) वृक्षे फलानि फलितवन्ति सन्ति । (द्विवचने)

(छ) पिता शास्त्रं सम्यग् ज्ञातवान् अस्ति । (स्त्रीलिङ्गे)

(ज) भ्रातृजायाः ओदनं पक्ववत्यः । (एकवचने)

(झ) त्वं नाटकं दृष्टवान् असि । (उत्तमपुरुषे)

(ञ) वयं गुरुम् नतवन्तः । (द्विवचने)

## रचनात्मकः अभ्यासः

१. 'सेवा हि परमो धर्मः' इति विषये एकम् अनुच्छेदं स्वभाषायां लिखत ।

२. युष्माकं समुदाये वर्तमानायाः सेवाप्रदायिन्याः कस्याश्चित् संस्थायाः उद्देश्यं किमस्ति ? सा संस्था समुदाये कीदृशी सेवां कुर्वन्ती अस्ति ? तस्याः कार्यम् उद्देश्यानुसारि वर्तते न वा ? सर्वम् अनुसन्धाय तस्याः संस्थायाः विषये कक्षायां श्रावयत ।

३. काचिद् वृद्धा स्वगृहगमनस्य मार्गं विस्मृत्य मार्गे इतस्ततः प्रचलन्ती अस्ति । त्वमपि तस्याः वृद्धायाः गृहगमनमार्गं न जानासि । अस्याम् अवस्थायां त्वं किं करोषि ?

४. समुदाये वृद्धाश्रमः आवश्यकः अस्ति न वा ? इति विषये कक्षाविमर्श कृत्वा निष्कर्ष विलिख्य शिक्षकं श्रावयत ।

५. परिश्रमस्य लाभानाम्, आलस्यस्य हानीनां च सूची निर्माय कक्षायां प्रदर्शयत ।

## श्रवणपाठः

### १. श्रवणपाठं श्रुत्वा रिक्तस्थानं पूरयत

दीनेभ्यो दानं महत्पुण्यं कथ्यते । तत्रापि रक्तदानं तु जीवनदानमेव अस्ति । रक्ताभावेन जीवनं त्यजतां जीवनरक्षणं रक्तदानेन भवति । नेपाले रक्तदानस्य परम्परा नासीत् । रक्तदानम् अपि कर्तुं शक्यते इति जनाः न बुध्यन्ते स्म । रक्तदाने विहिते स्वस्य जीवनमेव नश्यति इति तस्मिन् समये जनानां विचारः आसीत् । दयावीरसिंहः कंसकारः (वि.सं १९६८-२०४७) नेपालस्य प्रथमः रक्तदाता अस्ति । २००० तमे वैक्रमाब्दे स एकदा मित्रेण सह मेलनार्थं वीरचिकित्सालयं गतवान् आसीत् । तत्र रुदती काञ्चिद् महिलां दृष्ट्वा सः रोदनकारणम् अपृच्छत् । सः स्वपुत्रस्य अवस्थां बोधयन्ती अकथयत्- "रक्ताभावेन मम पुत्रः म्रियमाणः अस्ति ।" दयावीरः तामेव महिलां पुत्राय रक्तं दातुं प्रैरयत् परं सा अबिभेत् । अतः रक्तसमूहपरीक्षणं कृत्वा दयावीर एव तस्याः पुत्राय रक्तम् अददात् । तस्य जीवनं च रक्षितम् अभवत् । दयावीरः युवसमुदाये रक्तदानसम्बद्धां चेतनां प्रसारयितुम् आरभत । दयावीरस्य कार्येण युवसमुदायः परिवर्तितः अभवत् । युवसमुदायः रक्तदानेन म्रियमाणस्य अपि जीवनरक्षा भवति इति अजानात् । दयावीरः रक्तदानकर्मणि युवसमुदायं सक्रियं कर्तुम् एकं समूहम् अस्थापयत् । तस्मिन् समूहे युवानः युवत्यश्च स्वयंसेवकरूपेण आबद्धाः भवन्ति स्म । स समूहः २००१/२००२ तमवैक्रमाब्दयोः समापतितायां विसूचिकायाः महामार्यां मानवसेवायाः प्रशंसनीयं कार्यम् अकरोत् । २००४ तमवैक्रमाब्दे दयावीरेण परोपकार औषधालयः संस्थापितः । तस्मिन् औषधालये अपि स एव स्वयंसेवकसमूहः आबद्धः अभवत् । २००७ तमे वैक्रमाब्दे प्रजातन्त्रप्राप्तेः अनन्तरं दयावीरः विधिम् अनुसृत्य परोपकारसंस्थाम् अस्थापयत् । विशेषतः रक्तदानकार्यक्रमाणाम् आयोजने, रक्तदानसम्बद्धचेतनाजागरणे, निःशुल्कस्वास्थ्योपचारशिविरायोजने, निःशुल्कौषधवितरणे, स्वास्थ्ययानसञ्चालने, रोगिभ्यः रक्तप्रापणे चेयं संस्था अद्यापि सक्रिया विद्यते ।

(क) ................ जीवनदानम् अस्ति ।

(ख) नेपालस्य प्रथमो रक्तदाता .................. अस्ति ।

(ग) दयावीरः ............... रक्तदानसम्बद्धां चेतनां प्रसारयितुम् आरभत ।

(घ) समूहे युवानः युवत्यश्च .................. आबद्धाः भवन्ति स्म ।

(ङ) २००१-२००२तमवैक्रमाब्दयोः ................ महामार्यां स समूहः प्रशंसनीयं कार्यमकरोत् ।

(च) २००४ तमे वैक्रमाब्दे दयावीरेण ............. संस्थापितः ।

(छ) प्रजातन्त्रप्राप्तेः अनन्तरं विधिमनुसृत्य दयावीरः ............... अस्थापयत् ।

तृतीयः
पाठ

# वेदनिर्दिष्टमनुशासनम्

चित्रसङ्केत :
वैदिक कालमा गुरुले शिष्यहरूलाई शिक्षा दिइरहेको झल्किने चित्र

सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः ।

आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ।

सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् ।

कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् ।

स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् ।

मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव ।
अतिथिदेवो भव ।

यान्यनवद्यानि कर्माणि तानि त्वया सेवितव्यानि, नो इतराणि ।

यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि ।

(तिमी) सत्य बोल । धर्म (धर्मको आचरण) गर । स्वाध्ययनबाट वञ्चित नहोऊ । तिमीले आचार्य (गुरु) लाई जे प्रिय छ, त्यो दक्षिणाको रूपमा दिएर गृहस्थ-आश्रममा प्रवेश गर्नू र सन्ततिको सूत्र (सन्तानको परम्परा) लाई नतोड्न" । सत्यबाट वञ्चित नहोऊ । धर्मपालनबाट वञ्चित नहोऊ । राम्रो काम र आफ्नो कल्याण हुने काम गर्नबाट वञ्चित नहोऊ । आफ्नो उन्नति गर्न वा वैभव बढाउनबाट वञ्चित नहोऊ । देवकार्य र पितृकार्यबाट वञ्चित नहुन" अर्थात् देवता र पितृप्रति तिम्रो जुन कर्तव्य छ, त्यसलाई सधैँ ध्यानमा राख्न" ।

मातालाई देवतासमान मान। पितालाई पनि देवस्वरूप मान्ने व्यक्ति बन। अतिथिलाई पनि देवतासमान व्यवहार गर। जति पनि दोषरहित कार्यहरू छन्, तिनैको तिमीले स्मरण र अभ्यास गर्नू, अरू दोषयुक्त कार्यको होइन। जुन हाम्रा सदाचार छन्, तिनैको तिमीले उपासना गर्नू, अरूको होइन।

## वैदिकवाङ्मयम्

वेदः सर्वप्राचीनो विपुलतमश्च ज्ञानराशिः वर्तते । विद्-धातोर्निष्पन्नस्य वेद-शब्दस्य अर्थः 'ज्ञानम्' अस्ति । तस्य मूलतात्पर्यं तु 'अध्यात्मविषयाणाम् अन्वेषणम्' अस्ति । वेदः छन्दोबद्धानां मन्त्राणां सङ्ग्रहो विद्यते । वेदमन्त्राणां कोऽपि रचयिता नास्तीति वेदः अपौरुषेयः कथ्यते ।

प्राचीनसमये वेदो लिपिबद्धो नासीत् । तदानीम् अस्या विद्याया अध्ययनम्, अध्यापनञ्च श्रुतिपरम्परया भवति स्म । शिष्या गुरुमुखात् श्रुत्वैव वेदमन्त्रान् कण्ठस्थान् कुर्वन्ति स्म । पश्चात् ते स्वशिष्यान् तथैव अध्यापयन्ति स्म । अतः वेदस्य अपरं नाम 'श्रुतिः' अस्ति । वेदवाक्यानि आगमप्रमाणरूपेण स्वीक्रियन्ते ।

प्रधानतया वेदो द्विविधो वर्तते- मन्त्ररूपो ब्राह्मणरूपश्च । वेदमन्त्राणां समूहः 'संहिता' इत्युच्यते । अतो वेदस्य मन्त्ररूपः प्रथमो भागः संहिता कथ्यते । ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूपो विद्यते । अत्र 'ब्राह्मण'पदं ग्रन्थविशेषस्य वाचकम् अस्ति । ब्राह्मणग्रन्थोऽपि भागत्रये विभक्तमस्ति- ब्राह्मणम्, आरण्यकम्, उपनिषच्च । अतः वेदः संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषद् चेति विभागचतुष्टययुक्तं प्राचीनतमं वाङ्मयं वर्तते । वेदस्य ब्राह्मणभागो यज्ञस्वरूपप्रतिपादको विद्यते । अयं गृहस्थाश्रमे उपयोगी मन्यते । आरण्यकं विज्ञानस्य अध्यात्मज्ञानस्य च बोधको वानप्रस्थाश्रमे उपयोगी वेदभागोऽस्ति । उपनिषद् आत्मनः, वेदानां सारभूतानां सिद्धान्तानां च प्रतिपादकः संन्यासाश्रमे उपयोगी वेदभागो वर्तते

वेदाः चत्वारः सन्ति- ऋक्, यजुः, साम, अथर्व चेति । वेदव्यासनाम्ना प्रसिद्धो महर्षिः कृष्णद्वैपायनः चतुर्षु भागेषु वेदमन्त्राणां विभाजनम् अकरोत् । संहिताश्च चतस्रो भवन्ति- ऋक्संहिता, यजुःसंहिता, सामसंहिता, अथर्वसंहिता च । तथैव ब्राह्मणग्रन्था अपि प्रत्येकं

वेदस्य पृथक् पृथक् सन्ति ।

मन्त्राणां स्वरूपभेदात् वेदः त्रिविधोऽपि विभज्यते- ऋग्वेदः, यजुर्वेदः, सामवेदश्चेति । अतो वेदः 'त्रयी' इति नाम्नापि ख्यातो विद्यते । यज्ञप्रधाना एते त्रयो वेदा 'वेदत्रयी' कथ्यन्ते । अथर्ववेदस्तु सांसारिकविषयप्रधानो मन्यते यद्यपि यज्ञसम्पादने अस्यापि महती भूमिका भवति । वेदत्रयी आमुष्मिकम् (पारित्रिकम्) फलं ददाति, अथर्ववेदस्तु ऐहिकम् (लौकिकम्) अपि फलं प्रयच्छति ।

ऋग्वेदः सर्वप्राचीनवेदः, विश्वस्य आदिमो ग्रन्थश्च विद्यते । 'ऋक्' इति देवानां स्तुतिपरकाणां छन्दोबद्धानां मन्त्राणां नाम अस्ति । अत ऋचां समूह ऋग्वेदो निगद्यते । ऋग्वेदः स्तोत्राणां महान् निधिः वर्तते । ऋग्वेदे अशीत्यधिकपञ्चशतोत्तरदशसहस्रसङ्ख्यकाः (१०५८०) मन्त्राः सन्ति । अस्य अधिकतराणां मन्त्राणामुपयोगो यज्ञेषु देवतानामाह्वानाय भवति । ऋग्वेदस्य मन्त्रपठनकर्ता (मूलपुरोहितः/ऋत्विक्) 'होता' इति पदमलङ्करोति । अग्निः ऋग्वेदस्य देवता अस्ति । पैलः ऋग्वेदस्य आचार्यः अस्ति । स एव व्यासस्य निर्देशेन ऋग्वेदसंहितानां सङ्कलनमकरोत् । ऋग्वेदस्य एकविंशतिः शाखाः सन्ति । तासु शाकल-वाष्कल-आश्वलायन-साङ्ख्यायन-माण्डूकायननामधेयाः पञ्च शाखाः मुख्याः सन्ति । एतासु अपि अधिकतराः शाखाः कालक्रमेण विलुप्ताः जाताः । सम्प्रति अस्य शाकलशाखीया संहिता एव प्रचलिता विद्यते । ऋग्वेदस्य ब्राह्मणभागे द्वौ ग्रन्थौ प्रसिद्धौ स्तः- ऐतरेयः, कौषितकिः च । ऐतरेय-कौषीतकि-साङ्ख्यायननामकानि चास्य त्रीणि आरण्यकानि सन्ति । अस्य एकविंशतिः उपनिषदः सन्ति, तेषु दश प्रसिद्धा विद्यन्ते । आयुर्वेदः ऋग्वेदस्य उपवेदो मन्यते ।

यजुर्वेदः यज्ञकर्मप्रधानो वेदोऽस्ति । अस्मिन् यज्ञयागादिक्रियाकलापानुरोधेन मन्त्राः सङ्गृहीताः सन्ति । यजुर्वेदसंहिताया द्वौ भागौ स्तः- शुक्लयजुर्वेदः, कृष्णयजुर्वेदश्च । शुक्लयजुर्वेदे केवलं मन्त्राणामेव विशुद्धतया प्रतिष्ठानं कृतं विद्यते । कृष्णयजुर्वेदे मन्त्रैः सह विनियोगवाक्यानि अपि सन्ति । तत्र मन्त्रब्राह्मणयोः द्वयोरपि मिश्रीभावः कृतोऽस्ति । यजुर्वेदस्य ऋत्विक् (मूलपुरोहितः) अध्वर्युः कथ्यते । अध्वर्युरेव यज्ञस्य वास्तविकं विधानं करोति । यजुर्वेदस्य देवता वायुरस्ति । यजुःसंहितानां सङ्कलनं वैशम्पायनमुनिना विहितम् । स एव यजुर्वेदस्य आचार्यः अस्ति । यजुर्वेदस्य शतम् (एकाधिकशतम्) शाखाः सन्ति । सम्प्रति शुक्लयजुर्वेदस्य माध्यन्दिनशाखा, काण्वशाखा चेति द्वे एव उपलभ्येते । कृष्णयजुर्वेदस्य च तैत्तिरीय-मैत्रायणी-कठ-कपिष्ठलाख्याः चतस्र एव शाखाः

समुपलभ्यन्ते । नेपाले माध्यन्दिनशाखाया अध्ययनाध्यापनपरम्परा प्रचलन्ती विद्यते । माध्यन्दिनशाखा वाजसनेयीनाम्नापि प्रसिद्धा वर्तते । शुक्लयजुर्वेदस्य शतपथब्राह्मणम्, कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणं च यजुर्वेदस्य प्रसिद्धौ ब्राह्मणग्रन्थौ स्तः । बृहदारण्यकं शुक्लयजुर्वेदस्य, तैत्तिरीयारण्यकं च कृष्णयजुर्वेदस्य आरण्यकग्रन्थौ स्तः । यजुर्वेदस्य नवाधिकशतम् उपनिषदः सन्ति । धनुर्वेदः यजुर्वेदस्य उपवेदो मन्यते ।

सामवेदो गानपरको वेदो वर्तते । अस्मिन् गीतिसम्बद्धाः स्वरबद्धा मन्त्राः सङ्गृहीताः सन्ति । इमे मन्त्रा लयबद्धरूपेण उच्चस्वरेण गीयन्ते । लौकिकगानविद्यायाः स्रोतः सामवेद एव वर्तते । सङ्गीतस्य सप्तस्वराः (सा-रे-ग-म-प-ध-नि) सामवेदादेव गृहीताः सन्ति । सामवेदस्य ऋत्विक् (मूलपुरोहितः) उद्गाता कथ्यते । स उच्चैः गिरा स्वरबद्धान् मन्त्रान् गायति । सामवेदस्य देवता आदित्यो वर्तते । सामवेदस्य आचार्यः जैमिनिरस्ति । सामवेदे पञ्चसप्तत्यधिकाष्टादशशतम् (१८७५) मन्त्राः सन्ति । तेषु अधिकतरा मन्त्राः ऋक्सामवेदयोः समानाः सन्ति । सामसंहितायाः केवलं पञ्चसप्ततिमन्त्रा एव ऋग्वेदाद् नवीनाः सन्ति । सामवेदस्य सहस्रं शाखाः सन्ति किन्तु तासु अधिकतराः कालक्रमेण विलुप्ता अभवन् । विद्यमानासु शाखासु कौथुमीय-रामायणीय-जैमिनीयशाखाः प्रसिद्धाः सन्ति । सामवेदस्य आर्षेय-ताण्ड्य-षड्विंश-छान्दोग्य-जैमिनीय-भल्लवीत्यादयो ब्राह्मणग्रन्थाः सन्ति । सामवेदस्य छान्दोग्य-जैमिनीय-सामविधानादीनि अरण्यानि प्रसिद्धानि वर्तन्ते । अस्य सहस्रसङ्ख्यका उपनिषदः सन्ति । गान्धर्ववेदः सामवेदस्य उपवेदः स्वीक्रियते ।

अथर्ववेदः अभिचारक्रियायाः प्राधान्येन प्रतिपादको वेदोऽस्ति । अस्य नामकरणम् अथर्वनामकस्य ऋषेः नाम्ना विहितमस्ति । वेदोऽयम् अथर्वा, अङ्गिरा चेति ऋषिद्वयेन दृष्टानां मन्त्राणां समूहं प्रस्तौति । अतोऽयं वेदः अथर्वाङ्गिरोनाम्नापि ख्यातो विद्यते । अस्मिन् वेदे द्विविधा मन्त्राः सङ्गृहीताः सन्ति- अथर्वणा दृष्टाः शान्ति-पौष्टिककर्मसम्बद्धाः, अङ्गिरसा दृष्टा आभिचारिककर्मसम्बद्धाश्च । अतः अयं वेदः लौकिकानां पारलौकिकानां च विषयाणां प्रतिपादको विद्यते । जीवनं सुखसमन्वितं विधातुं येषां साधनानाम् अपेक्षा भवति, तेषां सिद्ध्यर्थम् अस्मिन् वेदे विविधानाम् अनुष्ठानानां विधानं विहितमस्ति । अयं वेदः स्वास्थ्यरक्षणस्य रोगनिवारणस्य च उपायान् शिक्षति । अर्थशास्त्रस्य स्रोतोऽपि अथर्ववेद एव विद्यते । अथर्ववेदस्य ऋत्विक् ब्रह्मा वर्तते, स च यज्ञस्य अध्यक्षो भवति । तस्य प्रधानदायित्वं समस्तयज्ञकर्मणां निरीक्षणम्, सम्भाव्यत्रुटीनां मार्जनं च भवति । सोमः अथर्ववेदस्य देवता अस्ति । सुमन्तुः अस्य वेदस्य आचार्यो वर्तते । अथर्ववेदे

सप्ताशीत्यधिकनषष्टिशतसङ्ख्यकाः (५९८७) मन्त्राः सन्ति । तेषु द्वादशशतमन्त्राः ऋग्वेदेऽपि समानाः दृश्यन्ते । गोपथम् अथर्ववेदस्य एकमेव ब्राह्मणं वर्तते । अस्य वेदस्य आरण्यकं नास्ति । अस्य पञ्चाशत् उपनिषदः सन्ति । स्थापत्यवेदः (अर्थवेदः) अथर्ववेदस्य उपवेदो मन्यते ।

वेदानां सम्यक् अवबोधाय वेदाङ्गानि विरचितानि सन्ति । शिक्षा, कल्पः, व्याकरणम्, निरुक्तम्, छन्दः, ज्योतिषम् इत्येतानि वेदाङ्गानि विद्यन्ते । षट् अङ्गानि सन्तीति कारणेन वेदः षडङ्ग उच्यते । अङ्गशब्दस्यार्थः 'उपकारकः' भवति । वेदार्थज्ञानाय येषां शास्त्राणाम् आवश्यकता भवति, तानि एव शास्त्राणि वेदाङ्गानि कथ्यन्ते ।

वैदिकवाङ्मयं संस्कृतवाङ्मयस्य प्राचीनधारा विद्यते । इदं वाङ्मयं न केवलं प्राचीनतमम् अपितु समृद्धतमं विशालतमं च वर्तते । इदं सर्वविधवाङ्मयानां स्रोतो विद्यते । वैदिकशब्दो वेदविषयकाणां बहुविधसामग्रीणां सूचको वर्तते । वेदसंहिताः, ब्राह्मणानि, आरण्यकानि, उपदिषदः, वेदाङ्गानि च वेदविषयकसामग्र्यः सन्ति । यद्यपि स्मृति-पुराण-दर्शनादिग्रन्थानामपि विषया वेदाधृताः सन्ति, परन्तु तेषां परिगणनं लौकिकवाङ्मये भवति । संस्कृतवाङ्मयस्य वैदिकोत्तरधारा लौकिकवाङ्मयं कथ्यते ।

वैदिकवाङ्मये मानवजीवनोपयोगिनः सर्वेऽपि विषयाः साधु विवेचिताः सन्ति । वेदेषु ज्ञान-विज्ञान-धर्म-दर्शन-नीति-सदाचार-संस्कृति- समाज-राजनीतिप्रभृतीनां जीवनोपयोगिविषयाणां सन्निवेशो वर्तते । वस्तुतो वेदोऽस्माकं समाजस्य सांस्कृतिकनिधिरस्ति ।

वेद सबैभन्दा प्राचीन र सबैभन्दा विशाल ज्ञानराशि हो । विद् धातुबाट बनेको वेद शब्दको अर्थ ज्ञान हुन्छ । यसको मौलिक तात्पर्य भने 'आध्यात्मिक विषयहरूको अन्वेषण' हुन्छ । वेद छन्दोबद्ध मन्त्रहरूको सङ्ग्रह हो । वेदमन्त्रहरूको रचना कुनै व्यक्तिले गरेको होइन भन्ने मान्यताअनुसार यसलाई अपौरुषेय भनिन्छ ।

प्राचीन समयमा वेद लिपिबद्ध थिएन । त्यतिवेला यो विद्याको अध्ययन-अध्यापन र विस्तार श्रुति परम्पराले हुन्थ्यो । शिष्यहरूले गुरुको मुखबाट सुनेर नै वेदका मन्त्रहरूलाई कण्ठस्थ गर्दथे । पछि उनीहरू आफ्ना शिष्यहरूलाई त्यसरी नै अध्यापन गराउँथे । त्यसैले वेदको अर्को नाम श्रुति हो । वेदवाक्यहरूलाई आगम प्रमाणको रूपमा स्वीकार गरिन्छ ।

प्रधान रूपमा वेदका दुई भाग छन्- मन्त्र भाग र ब्राह्मण भाग । वेदका मन्त्रहरूको

समूहलाई संहिता भनिन्छ । त्यसले वेदको मन्त्ररूप पहिलो भागलाई संहिता भनिन्छ । वेदको ब्राह्मणरूप भाग भने संहिताभागको व्याख्या स्वरूपमा हो । यहाँ 'ब्राह्मण' शब्दले ग्रन्थविशेषलाई बुझाउँछ । ब्राह्मण ग्रन्थ पनि तिन भागमा विभक्त छ- ब्राह्मण, आरण्यक, उपनिषद् । त्यसैले वेद संहिता, ब्राह्मण, आरण्यक र उपनिषद् गरी चार विभागले युक्त प्राचीनतम वाङ्मय हो । वेदको ब्राह्मण भागले यज्ञको स्वरूपलाई प्रतिपादन गर्दछ । यो भाग गृहस्थ आश्रममा बढी उपयोगी मानिन्छ । आरण्यक भागले विज्ञान र आध्यात्मिक ज्ञानको बोध गराउँछ जुन वानप्रस्थ आश्रममा उपयोगी मानिन्छ । उपनिषद् भागले आत्मा र वेदका सारभूत सिद्धान्तहरूलाई प्रतिपादन गर्दछ जुन संन्यास आश्रमका लागि उपयोगी मानिन्छ ।

वेद चारओटा छन्- ऋग्वेद, यजुर्वेद, सामवेद र अथर्ववेद । वेदव्यास नामले प्रसिद्ध महर्षि कृष्णाद्वैपायनले वेदका मन्त्रहरूलाई चार भागमा विभाजन गरे । संहिताका पनि चार प्रकार छन्- ऋक्संहिता, यजुःसंहिता, सामसंहिता र अथर्वसंहिता । त्यसै गरी ब्राह्मण ग्रन्थहरू पनि प्रत्येक वेदका फरक फरक छन् ।

मन्त्रहरूको स्वरूपगत भिन्नताको दृष्टिले वेदलाई तिन भागमा पनि विभाजन गरिन्छ- ऋग्वेद, यजुर्वेद र सामवेद । त्यसैले वेद त्रयी नामले पनि प्रसिद्ध छ । यी तिन वेद यज्ञप्रधान छन् र यिनलाई वेदत्रयी भनिन्छ । अथर्ववेदलाई भने सांसारिक विषयप्रधान मानिन्छ, यद्यपि यज्ञको सम्पादनमा यसको पनि महत्त्वपूर्ण भूमिका हुन्छ । वेदत्रयीले पारलौकिक फल प्रदान गर्ने र अथर्ववेद यही लोकका लागि फलदायक मानिन्छ ।

ऋग्वेद सबैभन्दा प्राचीन वेद र विश्वको पहिलो ग्रन्थ पनि हो । ऋक् देवताहरूको स्तुतिपरक छन्दोबद्ध मन्त्रहरूको नाम हो । त्यसैले ऋग्वेद ऋक्हरूको समूह हो । ऋग्वेद स्तोत्रहरूको ठूलो खानी हो । ऋग्वेदमा दश हजार पाँच सय असी मन्त्र छन् । यसका धेरैजसो मन्त्रको उपयोग यज्ञमा देवताको आह्वानका लागि हुन्छ । ऋग्वेदको मन्त्रपाठ गर्ने मूल पुरोहित (ऋत्विक्) लाई होता भनिन्छ । अग्नि ऋग्वेदका प्रमुख देवता हुन् । ऋग्वेदका प्रमुख आचार्य पैल हुन् । पैलले नै व्यासको निर्देशनमा ऋग्वेदसंहिताको सङ्कलन गरेका थिए । ऋग्वेदका एक्काइस शाखा छन् । तीमध्ये शाकल, वाष्कल, आश्वलायन, साङ्ख्यायन, माण्डूकायन नाम गरेका पाँच शाखा मुख्य छन् । ती शाखामा पनि धेरैजसो समयको अन्तरालमा लोप भइसकेका छन् । अहिले यसको शाकलशाखीय संहिता मात्र प्रचलनमा छ । ऋग्वेदको ब्राह्मण भागमा

दुईओटा ग्रन्थ प्रसिद्ध छन्- ऐतरेय र कौषितकि । आरण्यकतर्फ ऐतरेय, कौषीतकि, साङ्ख्यायन नामका तिन ग्रन्थहरू छन् । यसका एक्काइस उपनिषद् छन्, जसमध्ये दशओटा प्रसिद्ध छन् । आयुर्वेदलाई ऋग्वेदको उपवेद मानिन्छ ।

यजुर्वेद यज्ञकर्मप्रधान वेद हो । यसमा यज्ञको विधि र कर्मकाण्डीय प्रक्रियाका लागि आवश्यक मन्त्रहरूको संग्रह गरिएको छ । यजुर्वेदसंहिताका दुई भाग छन्- शुक्ल यजुर्वेद र कृष्ण यजुर्वेद । शुक्ल यजुर्वेदमा केवल मन्त्रहरूको सङ्ग्रह गरिएको छ । कृष्ण यजुर्वेदमा मन्त्रसँगै विनियोग वाक्यहरू पनि छन् । त्यहाँ मन्त्र र ब्राहमण दुवैको मिश्रण छ । यजुर्वेदको ऋत्विक्लाई अध्वर्यु भनिन्छ । अध्वर्युले नै यज्ञको वास्तविक विधान गर्दछन् । यजुर्वेदका प्रमुख देवता वायु हुन् । यजुःसंहिताको सङ्कलन वैशम्पायन ऋषिले गरेका हुन् । उनी नै यजुर्वेदका आचार्य हुन् । यजुर्वेदका एक सय शाखा छन् । अहिले शुक्ल यजुर्वेदका माध्यन्दिन र काण्व गरी दुई शाखा मात्र उपलब्ध छन् । कृष्ण यजुर्वेदका तैत्तिरीय, मैत्रायणी, कठ, कपिष्ठल गरी चार शाखा उपलब्ध छन् । नेपालमा शुक्ल यजुर्वेदको माध्यन्दिन शाखाको अध्ययन-अध्यापनको परम्परा प्रचलनमा छ । माध्यन्दिन शाखा वाजसनेयी नामले पनि प्रसिद्ध छ । शुक्ल यजुर्वेदको शतपथ ब्राहमण र कृष्ण यजुर्वेदको तैत्तिरीय ब्राहमण यजुर्वेदका प्रसिद्ध ब्राह्मण ग्रन्थ हुन् । बृहदारण्यक शुक्ल यजुर्वेदको र तैत्तिरीयारण्यक कृष्ण यजुर्वेदका आरण्यक ग्रन्थ हुन् । यजुर्वेदका एक सय नौ ओटा उपनिषद् छन् । धनुर्वेदलाई यजुर्वेदको उपवेद मानिन्छ ।

सामवेद गायनमा आधारित वेद हो । यसमा गानसम्बद्ध स्वरबद्ध मन्त्रहरूको सङ्ग्रह गरिएको छ । यी मन्त्रहरू स्वरबद्ध रूपमा ठूलो स्वरले गाइन्छन् । लौकिक गानविद्याको स्रोत सामवेद नै हो । सङ्गीतका सात स्वर सामवेदबाट नै लिइएका हुन् । सामवेदको ऋत्विक्लाई उद्गाता भनिन्छ । उद्गाताले ठूलो स्वरमा स्वरबद्ध मन्त्रहरू गाउँछन् । सामवेदका देवता आदित्य (सूर्य) हुन् । सामवेदका आचार्य जैमिनि हुन् । सामवेदमा एक हजार आठ सय पचहत्तर मन्त्र छन् । तीमध्ये धेरैजसो मन्त्र ऋग्वेदका मन्त्रसित मिल्दछन् । सामसंहितामा केवल पचहत्तर मन्त्र मात्र ऋग्वेदमा नभएका नयाँ छन् । ऋग्वेदका हजार शाखा छन् तर तीमध्ये धेरैजसो लोप भइसकेका छन् । अहिले उपलब्धमध्ये कौथुमीय, रामायणीय र जैमिनीय शाखा प्रसिद्ध छन् । सामवेदका आर्षेय, ताण्ड्य, षडविंश, छान्दोग्य, जैमिनीय, भल्लवी आदि ब्राहमण ग्रन्थ छन् ।

सामवेदका छान्दोग्य, जैमिनीय, सामविधान आदि आरण्यक ग्रन्थ छन् । सामवेदका हजार ओटा उपनिषद् छन् । गान्धर्ववेदलाई सामवेदको उपवेद मानिन्छ ।

अथर्ववेद प्रमुख रूपमा अभिचार (मारण, मोहन आदि) क्रियाहरूलाई प्रतिपादन गर्ने वेद हो । यसको नामकरण अथर्वा ऋषिको नामबाट गरिएको हो । यो वेद अथर्वा र अङ्गिरा ऋषिले देखेका मन्त्रहरूको समूह हो । त्यसैले यो वेद अथर्वाङ्गिर नामले पनि प्रसिद्ध छ । यो वेदमा दुई प्रकारका मन्त्रहरू सङ्गृहीत छन्- अथर्वा ऋषिले देखेका शान्तिकर्म र पौष्टिक कर्मसम्बन्धी मन्त्र र अङ्गिरा ऋषिले देखेका आभिचारिक कर्मसम्बन्धी मन्त्र । त्यसैले यो वेदले लौकिक र पारलौकिक दुवै विषयको प्रतिपादन गर्दछ । जीवनलाई सुखमय बनाउन जे-जस्ता साधनहरूको आवश्यकता हुन्छ, तिनीहरूलाई सिद्ध गर्नका लागि यो वेदमा विविध अनुष्ठानहरू विधान गरिएका छन् । अथर्ववेदले स्वास्थ्यरक्षा र रोगनिवारणका उपायहरू सिकाउँछ । अर्थशास्त्रको स्रोत पनि अथर्ववेद नै हो । अथर्ववेदका ऋत्विक्लाई ब्रह्मा भनिन्छ, जो यज्ञका अध्यक्ष हुन्छन् । उनको प्रधान दायित्व समग्र यज्ञकर्मको निरीक्षण गर्नु र सम्भावित त्रुटिहरूको निराकरण गर्नु हो । अथर्ववेदका देवता सोम हुन् । सुमन्तु अथर्ववेदका आचार्य हुन् । अथर्ववेदमा पाँच हजार नौ सय सतासी मन्त्र छन् । तीमध्ये एक हजार दुई सय मन्त्र ऋग्वेदमा पनि छन् । अथर्ववेदको एक मात्र ब्राह्मण ग्रन्थ गोपथ हो । यो वेदको कुनै पनि आरण्यक ग्रन्थ छैन । यस वेदका पचास ओटा उपनिषद् छन् । स्थापत्यवेदलाई अथर्ववेदको उपवेद मानिन्छ ।

वेदलाई सही रूपमा बुझ्न वेदाङ्गहरूको रचना गरिएको छ । शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द र ज्योतिष वेदाङ्ग हुन् । छ ओटा अङ्ग भएका कारण वेदलाई षडङ्ग भनिन्छ । अङ्ग शब्दको अर्थ उपकारक हुन्छ । वेदको अर्थज्ञानका लागि जुन जुन शास्त्रको आवश्यकता पर्दछ, ती शास्त्र नै वेदाङ्ग हुन् ।

वैदिक वाङ्मय संस्कृत वाङ्मयको प्राचीन धारा हो । यो वाङ्मय सबैभन्दा प्राचीन मात्र होइन, सबैभन्दा समृद्ध र विशाल पनि छ । यो सबै वाङ्मयको स्रोत हो । वैदिक शब्द वेद विषयक धेरै प्रकारका सामग्रीहरूको सूचक शब्द हो । वेदसंहिता, ब्राह्मणहरू, आरण्यकहरू, उपनिषद्हरू र वेदाङ्गहरू वेद विषयक सामग्री हुन् । यद्यपि स्मृति, पुराण, दर्शन आदि ग्रन्थहरूको विषय पनि वेदमा आधारित छन् तर तिनीहरूको गणना लौकिक वाङ्मयमा हुन्छ । संस्कृत वाङ्मयको वैदिकोत्तर

धारालाई लौकिक वाङ्मय भनिन्छ ।

वैदिक वाङ्मयमा मानव जीवनका उपयोगी सबै विषयको राम्रो विवेचना गरिएको छ । वेदहरूमा ज्ञान, विज्ञान, धर्म, दर्शन, नीति, सदाचार, संस्कृति, समाज, राजनीति लगायत जीवनोपयोगी विषयहरू छन् । वास्तवमा वेद हाम्रो समाजको सांस्कृतिक निधि हो ।

## शब्दार्थः

| | | | |
|---|---|---|---|
| वेदः/श्रुतिः | ज्ञानम्, आम्नायः, निगमः | वेद, ज्ञान | **Knowledge, Veda** |
| वैदिकः | वेदसम्बद्धः | वेदसम्बन्धी | Derived from the Vedas |
| वाङ्मयम् | वाक्यस्वरूपं शास्त्रम्, साहित्यम् | वाङ्मय, साहित्य | Literature |
| ज्ञानम् | विशेषेण सामान्येन च अवबोधः | ज्ञान | Knowledge |
| प्राचीनतमम् | अतिशयेन प्राक् | सबैभन्दा पुरानो | Very ancient |
| अध्यात्मम् | आत्मज्ञानम् | आत्मज्ञान | The supreme spirit |
| अन्वेषणम् | अनुसन्धानम् | खोज, अनुसन्धान | Investigation |
| छन्दोबद्धः | छन्दसा बद्धः, पद्ये स्थितः | छन्दले बाँधिएको, पद्यमा भएको | Metrified |
| स्वरबद्धः | | स्वरले बाँधिएको, साङ्गीतिक | Tuned |
| मन्त्रः | ऋक्, देवादीनां साधनार्थ तन्त्राद्युक्तः शब्दभेदः, वेदभागभेदः | मन्त्र | A sacares text |
| अपौरुषेयः | अलौकिकः, ईश्वरकृतः | मानवले नबनाएको, ईश्वरप्रदत्त | Not made by man, Gifted by God |
| मत्वा | स्वीकृत्य | मानेर | By believing |
| द्विविधः | द्विप्रकारकः | दुई प्रकार भएको | With two kinds |
| त्रिविधः | त्रिप्रकारकः | तीन प्रकार भएको | With three kinds |
| संहिता | वेदस्य मन्त्रविभागः | वेदको मन्त्रविभाग | Mantra portion of the Veda |

| | | | |
|---|---|---|---|
| ब्राह्मणम् | वेदस्य व्याख्यात्मको द्वितीयो भागः | वेदको दोस्रो भाग | The second portion of the Veda |
| आरण्यकम् | वेदस्य ब्राह्मणभागस्य एकः अंशः | वेदको ब्राह्मण भागअन्तर्गतको एक भाग | A portion of the Veda |
| उपनिषद् | ब्रह्मविद्या, वेदान्तः | ब्रह्मविद्याको रूपमा मानिने वेदको अन्तिम भाग | True knowledge regarding the Supreme Spirit which is the last portion of the Veda |
| प्रतिपादकः | प्रतिपादनकर्ता, बोधकः | राम्ररी बुझाउने, कुनै कुराको प्रमाण साबित गर्ने | Prover, Explainer |
| प्रतिपादनम् | प्रतिपत्तिः, बोधनम् | राम्रो किसिमले सम्झाउने काम, कुनै कुराको प्रमाण साबित गर्नु | Proving, Explaining |
| ऋक्, यजुः, साम, अथर्व | चतुर्णां वेदानां यथाक्रमं नामानि- ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्च | चार वेदको क्रमशः नाम- ऋग्वेद, यजुर्वेद, सामवेद र अथर्ववेद | Name of the four Vedas respectively- Rigveda, Yajurveda, Samaveda and Atharvaveda |
| उपवेदः | प्रधानवेदातिरिक्तो वेदः, वेदसदृशा आयुर्वेद-धनुर्वेद-गान्धर्ववेद-स्थापत्यवेदनामका वेदाः | मूल वेदबाहेकको वेदजस्तै वेद जुन आयुर्वेद, धनुर्वेद, गान्धर्ववेद र स्थापत्यवेद गरी चार छन् | A class of writings subordinate to the Vedas |
| ऋत्विक् | याजकः, पुरोहितः | यज्ञकर्ता, यज्ञमा वरण गरिएको मूल पुरोहित | A priest who officiates at of sacrifice |

| | | | |
|---|---|---|---|
| होता | ऋग्वेदकर्मकर्ता, यज्ञे ऋचां पाठको मूलपुरोहितः | यज्ञमा ऋग्वेदको मन्त्र पढ्ने मूल पुरोहित | An officiating priest of Rigveda |
| अध्वर्युः | यजुर्वेदकर्मकर्ता, यज्ञे यजुःसंहितानां पाठको मूलपुरोहितः | यज्ञमा यजुर्वेदको संहितापाठ गर्ने वा विधिपूर्वक यज्ञकर्म सम्पादन गर्ने पुरोहित | An officiating priest of Yajurveda |
| उद्गाता | सामवेदकर्मकर्ता, यज्ञे सामसंहितानां गायको मूलपुरोहितः | यज्ञमा सामवेदको संहिता गाउने मूल पुरोहित | An officiating priest of Samaveda |
| ब्रह्मा | अथर्ववेदकर्मकर्ता, यज्ञस्य निरीक्षकः अध्यक्षश्च, अथर्ववेदस्य मूलपुरोहितः | यज्ञमा अथर्ववेदको संहिता पढ्ने मूल पुरोहित जो यज्ञको निरीक्षणकर्ता र अध्यक्ष पनि हुन्छ | An officiating priest of Atharvaveda |
| पुरोहितः | धर्मकर्मादीनां कारकः, पुरोधाः | पुरोहित | Priest |
| यज्ञः/यागः | अध्वरः, क्रतुः | यज्ञ | A sacrifice |
| कर्म | क्रिया | काम | Action, Work |
| आमुष्मिकः/ पारलौकिकः/ पारत्रिकः | अमुष्मिन् भवः, परलोके भवः | परलोकमा भएको | Belonging to the next or other world |
| ऋषिः | शास्त्रकृदाचार्यः | ऋषि | An inspired poet or sage |
| ख्यातः | प्रसिद्धः | प्रसिद्ध | Known |
| अनुष्ठानम् | कर्मारम्भः, विहितकर्मादिकरणम् | अनुष्ठान, कामको आरम्भ | Acting in conformity to |

| | | | |
|---|---|---|---|
| वेदाङ्गम् | श्रुत्यवयवानि षट् प्रकारशास्त्राणि, वेदस्य षट् शिक्षादीनि अङ्गानि | वेदका अङ्गका रूपमा लिइने शिक्षा आदि छ ओटा शास्त्रहरू | Six organs of the Veda |
| उपकारकः | उपकारकर्ता | उपकार गर्ने | Doing service of favour, Helper, Contributer |
| अवबोधः | ज्ञानम् | ज्ञान | Knowledge, Becoming awake |
| सम्यक् | उचितम्, यथार्थम्, साधु | ठिक तरिकाले, राम्ररी | Properly, Duly |
| लौकिकम् | लोके विदितम् | लोकमा भएको | Ordinary, Common, Worldly |
| विभागः | भागः | विभाग, भाग | Division, Portion |
| शिक्षा | वेदाङ्गविशिष्टम् उच्चारणशास्त्रम् | वेदको अङ्गका रूपमा रहेको उच्चारण शास्त्र | The science which teaches the proper pronunciation of words and laws of euphony, One of the six Vedangas |
| कल्पः | वेदाङ्गविशिष्टं विधानशास्त्रम् | वेदको अङ्गका रूपमा रहेको विधान शास्त्र | The costomary proceedings of Yagas, One of the six Vedangas |
| व्याकरणम् | वेदाङ्गविशिष्टं शब्दशास्त्रम् | व्याकरण, वेदको अङ्गका रूपमा रहेको शब्द शास्त्र | Grammar, One of the six Vedangas |
| छन्दः | वेदाङ्गविशिष्टं पद्यशास्त्रम् | वेदको अङ्गका रूपमा रहेको पद्य शास्त्र | Verses, One of the six Vedangas |
| निरुक्तः | वेदाङ्गविशिष्टं व्युत्पत्तिशास्त्रम् | वेदको अङ्गका रूपमा रहेको व्युत्पत्ति शास्त्र | One of the six Vedangas |

| | | | |
|---|---|---|---|
| ज्योतिषम् | वेदाङ्गविशिष्टं गणनशास्त्रम् | वेदको अङ्गका रूपमा रहेको गणना शास्त्र | Astronomy, One of the six Vedangas |
| निधिः | वस्तुन आषारः | ढुकुटी | Abode, Reservoir |
| राशिः | पुञ्जः, समूहः | वस्तुहरूको थुप्रो, पुञ्ज | Mass, Collection |
| आदिमः | प्रथमः, आदौ भवः | पहिलो | First |
| उच्चैः | उन्नतम्, महत् | ठूलो स्वरले | Loudly |
| गानम् | गेयम्, गीतिः | गान, गाउने काम | Singing |

## अभ्यासः

### श्रवणं भाषणं च

१. सखिमुखात् श्रुत्वा पदानि अनूच्चारयत

वाङ्मयम्, ऋक्संहिता, ब्राह्मणम्, आरण्यकम्, सन्निवेशः, अथर्ववेदः, वेदाङ्गानि

२. अधस्तनस्य अनुच्छेदस्य श्रुतिलेखनं कुरुत

वैदिकवाङ्मयं सहयोगस्य परस्परम् आदानप्रदानाय उपदिशति । वेदेषु उपनिषदादिषु च यज्ञ-दान-तपांसि वर्णितानि सन्ति । एतानि गृहस्थैः अनुष्ठेयानि कर्माणि सन्ति । तत्र दानस्य स्थानं सर्वोपरि परिलक्ष्यते । परन्तु दानं विधिसम्मतं भवितुमर्हति । दानं सदैव श्रद्धया कर्तव्यम् । गुरु-शास्त्रवाक्येषु विश्वासः श्रद्धा उच्यते । शास्त्रीयेषु कर्मसु श्रद्धा प्राधान्येन अपेक्षते । अतः सर्वाणि शास्त्रीयाणि कर्माणि श्रद्धयैव कर्तव्यानि भवन्ति । अश्रद्धया कदापि दानं न कर्तव्यम् । अश्रद्धया कृतं दानं भस्मनि हुतं हविरिव व्यर्थ भवति । तथैव सुपात्राय एव दातव्यं भवति । तथा च प्रशन्नतया, नम्रतया, प्रेमपूर्वकं च देयम् । एवं सम्पदमनुसृत्य (सामर्थ्यानुसारेण) दानं कर्तव्यम् । श्रीमता जनेन अधिकं देयम्, दरिद्रेण तु स्वसामर्थ्यानुगुण्येन एव दातव्यम् । दानविषये तैत्तिरीयोपनिषदि उक्तमस्ति-

श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ॥

वैदिक वाङ्मयले सहयोग परस्पर आदान-प्रदान गर्न सिकाएको छ । वेद र उपनिषद् आदि ग्रन्थहरूमा यज्ञ, दान र तपको विषयमा वर्णन गरिएको छ । गृहस्थाश्रममा बस्ने व्यक्तिहरूले यी विषयहरूको अनुष्ठान गर्नुपर्छ । यी कर्महरूमा दानको स्थान सबैभन्दा माथि छ । तर दान विधिसम्मत गर्नुपर्छ । दान सधैँ श्रद्धापूर्वक गर्नुपर्छ । गुरुवाक्य र शास्त्रवाक्यमा विश्वास नै श्रद्धा हो । सबै शास्त्रीय कर्ममा श्रद्धाको विशेष अपेक्षा गरिन्छ । त्यसैले सबै शास्त्रीयक कर्महरू श्रद्धापूर्वक गर्नुपर्छ । अश्रद्धाले कहिल्यै दान गर्नुहुँदैन । अश्रद्धाले गरिएको दान खरानीमा होमिएको चरुजस्तै व्यर्थ हुन्छ । त्यसैगरी दान सुपात्रलाई मात्र दिनुपर्छ । दान प्रशन्न र नम्र भएर प्रेमपूर्वक गर्नुपर्छ । दान आफ्नो सामर्थ्यअनुसार गर्नुपर्छ । धनी व्यक्तिले धेरै र गरिब व्यक्तिले आफ्नो सामर्थ्यअनुकूल दान गर्नुपर्छ । दानको विषयमा तैत्तिरीय उपनिषद्मा भनिएको छ-

श्रद्धाले दिनुपर्छ । अश्रद्धाले दिनुहुँदैन । आफ्नो सम्पत्तिअनुसार दान गर्नुपर्छ । विनम्रतापूर्वक दान गर्नुपर्छ । भयले पनि दान गर्नुपर्छ । सहृदयताले दान गर्नुपर्छ ।

३. अधस्तनं पद्यं मित्रं श्रावयित्वा वेदाङ्गानां नामानि पृच्छत

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषन्तथा ।
छन्दश्चेति षडङ्गानि वेदानां वैदिका विदुः ॥

वैदिकहरू शिक्षा, कल्प, व्याकरण, निरुक्त, ज्योतिष र छन्दलाई वेदका छ अङ्का रूपमा जान्दछन् ।

४. प्रदत्तस्य अनुच्छेदस्य श्रवणेन तदनुवर्तिनां प्रश्नानामुत्तरं वदत

यज्ञस्य पूर्णनिष्पादनाय चत्वारः ऋत्विजो भवन्ति- होता, अध्वर्युः, उद्गाता, ब्रह्मा च । यज्ञेषु सम्बद्धवेदानां मन्त्रपठनकर्ता प्रमुखपुरोहितः ऋत्विक् उच्यते । ऋग्वेदस्य होता, यजुर्वेदस्य अध्वर्युः, सामवेदस्य उद्गाता, अथर्ववेदस्य ब्रह्मा च यज्ञे स्वकीयविभागस्य नेतृत्वं कुर्वन्ति । होता देवानाम् आह्वानकर्ता अस्ति । स प्रक्रान्तदेवतानां प्रशंसायां रचिता ऋग्वेदसंहिता उच्चारयन् देवान् आह्वयति । एतद् उद्देश्यमभिलक्ष्य व्यासः पैलमुनिम् ऋग्वेदं अध्यापयामास । अध्वर्युः विधिवद्यज्ञं सम्पादयति । यज्ञविधौ आवश्यका मन्त्राः यजुःसंहितायां सङ्गृहीताः सन्ति । व्यासो वैशम्पायनं यजुर्वेदमध्यापितवान् । उद्गाता उच्चैः गिरा स्वरबद्धान् मन्त्रान् गायति ।

तस्य अपेक्षितानां मन्त्राणां सङ्ग्रहः सामवेदे कृतो विद्यते । व्यासो जैमिनिमुनिं सामवेदम् अध्यापयत् । ब्रह्मा यज्ञस्य निरीक्षकः, त्रुटिसंशोधकश्च वर्तते । स एव यज्ञस्य अध्यक्षो भवति । अस्य प्रधानकार्यं यज्ञकर्मणां निरीक्षणम्, सम्भावितत्रुट्याः मार्जनं च भवति । एतदर्थं ब्रह्मणा सर्ववेदविदा भवितव्यम् । तेन मनसा बलेनापि सम्पन्नेन भवितव्यम् । तस्य ब्रह्मणः प्रधानवेदः अथर्ववेदोऽस्ति । वेदव्यासः सुमन्तुमुनिम् अथर्ववेदम् अध्यापितवान् ।

(क) सामवेदस्य ऋत्विजः केन नाम्ना व्यवह्रियते ?

(ख) यज्ञे ब्रह्मणः प्रधानकर्म किमस्ति ?

(ग) देवतानाम् अहवाने कस्याः संहिताया उपयोगो भवति ?

(घ) सुमन्तुः कस्य वेदस्य आचर्यो वर्तते ?

(ङ) वेदव्यासः कं यजुर्वेदम् अध्यापितवान् ?

यज्ञको पूर्णताका लागि चार ऋत्विक्हरू खटिएका हुन्छन्- होता, अध्वर्यु, उद्गाता र बहमा । यज्ञमा सम्बन्धित वेदको मन्त्र पढ्ने मूल पुरोहितलाई ऋत्विक् भनिन्छ । ऋग्वेदको होता, यजुर्वेदको अध्वर्यु, सामवेदको उद्गाता र अथर्ववेदको बहमाले यज्ञमा आ-आफ्नो विभागको नेतृत्व गर्दछन् । होताले देवताको आहवान गर्दछन् । उनी लक्षित देवताको प्रशंसामा रचित ऋग्वेदका मन्त्र पढेर देवताको आह्वान गर्छन् । यो उद्देश्य पूरा गर्न व्यासले पैल नाम गरेका ऋषिलाई ऋग्वेद पढाए । अध्वर्युले विधिपूर्वक यज्ञका कामहरू सम्पादन गर्छन् । यज्ञको वास्तविक कर्महरूमा आवश्यक मन्त्रहरूको सङ्ग्रह यजुःसंहितामा गरिएको छ । व्यासले वैशम्पायन मुनिलाई यजुर्वेद पढाए । उद्गाताले ठूलो स्वरले स्वरबद्ध मन्त्रहरू गाउँछन् । गायनसम्बद्ध मन्त्रको सङ्ग्रह सामवेदमा गरिएको छ । यो कामका लागि व्यासले जैमिनि मुनिलाई सामवेद पढाए । ब्रहमा यज्ञको निरीक्षक र त्रुटि सच्याउने व्यक्ति हुन् । उनी नै यज्ञका अध्यक्ष हुन्छन् । उनको प्रधान कार्य यज्ञको समग्र निरीक्षण र सम्भावित त्रुटिहरूको निराकरण गर्नु हो । यसका निम्ति ब्रहमाले सबै वेद जानेको हुनुपर्छ । उनी मन र बलले पनि सम्पन्न हुनुपर्छ । उनको अध्ययनको प्रमुख क्षेत्र भने अथर्ववेद हो । वेदव्यासले सुमन्तु नाम गरेका मुनिलाई अथर्ववेद पढाए ।

## ५. पाठे अस्तनपदानि अन्विष्य तत्सम्बद्धवाक्यानि कक्षायां श्रावयत

प्राचीनतमम्, अधिकतराः, ज्ञानराशिः, गानपरकः, चत्वारः, चतस्रः ।

६. वाक्यानि श्रुत्वा सत्यवाक्ये 'आम्', असत्यवाक्ये च 'न' इति वदत

(क) वेदाः षट् सन्ति ।

(ख) वैदिकवाङ्मयम् अर्वाचीनं वर्तते ।

(ग) ऋग्वेद आदिमो ग्रन्थो विद्यते ।

(घ) गोपथम् ऋग्वेदस्य ब्राह्मणग्रन्थोऽस्ति ।

(ङ) वेदः षडङ्गः कथ्यते ।

७. पाठस्य तृतीयमनुच्छेदं श्रुत्वा एकपदेन प्रश्नानामुत्तरं वदत

(क) वेदमन्त्राणां समूहस्य नाम किम् ?

(ख) वेदसंहितानां व्याख्यारूपो भागः किम् उच्यते ?

(ग) ब्राह्मणभागः कतिषु भागेषु विभक्तोऽस्ति ?

(घ) आरण्यकं कस्मिन् आश्रमे उपयोगि मन्यते ?

(ङ) 'इत्युच्यते' इत्यत्र प्रथमं पदं किम् ?

८. पाठस्य अन्तिममनुच्छेदं प्रवाच्य कक्षायां श्रावयत ।

९. श्रवणपाठं श्रुत्वा अधस्तनप्रश्नान् उत्तरयत

(क) आर्यभटः कदा अजायत ?

(ख) ग्रहणस्य कारणानि कानि ?

(ग) कस्य छायापातेन सूर्यग्रहणम् अनुभूयते ?

(घ) 'सूर्यः अचलः, पृथिवी च चला' इति सिद्धान्तस्य प्रवर्तकः कः ?

(ङ) आर्यभटः कतमे वयसि 'आर्यभटीयम्' इति ग्रन्थं व्यरचयत् ?

## पठनम्

१. पाठस्य आदौ प्रदत्तं वेदनिर्दिष्टमनुशासनं पठित्वा परस्परं मेलयत

| | |
|---|---|
| सत्यम् | भव |
| धर्मम् | सेवितव्यानि |
| अनवद्यानि कर्माणि | वद |
| मातृदेवः | न प्रमदितव्यम् |
| स्वाध्यायप्रवचनाभ्याम् | चर |

२. पाठस्य पञ्चममनुच्छेदं पठित्वा सन्धियुक्तपदानि रेखया परिवेष्टयत ।

३. अधस्तनमनुच्छेदं निरवच्छिन्नं पठित्वा कोष्ठस्थशब्दैः रिक्तस्थानं पूरयत

वेदानां चत्वारो भागाः सन्ति- संहिता, ब्राह्मणम्, आरण्यकम्, उपनिषद् च । प्रथमः संहिताभागो मन्त्राणां सङ्ग्रहोऽस्ति । अन्ये त्रयो भागाः संहितानां व्याख्यानाय निर्मिताः सन्ति । संहिताभागस्य उपयोगित्वं चतुर्षु आश्रमेषु प्रथमे ब्रह्मचर्याश्रमे अधिकं मन्यते । द्वितीयो ब्राह्मणभागो यज्ञस्वरूपप्रतिपादको विद्यते । ब्राह्मणग्रन्थेषु मन्त्राणां यागविधीनां च विशदतया प्रतिपादनं विहितं विद्यते । ब्राह्मणसाहित्यं गद्यात्मकं नितरां विशालं व्यापकञ्च अस्ति । अस्य उपयोगिता गृहस्थाश्रमे बलवती भवति । आरण्यकं विज्ञानस्य अध्यात्मज्ञानस्य च बोधको वेदभागोऽस्ति । अस्मिन् यज्ञस्य आध्यात्मिकरूपस्य दार्शनिकपक्षस्य च विवेचनं विहितमस्ति । वानप्रस्थाश्रमे पठिताः आध्यात्मिकचिन्तनधाराः आरण्यकानि सन्ति । आरण्यकं यज्ञीयगूढरहस्यस्य प्रतिपादनं करोति । अतः शास्त्रमिदं 'रहस्यब्राह्मणम्' इति नाम्नापि ख्यातोऽस्ति । वानप्रस्थाश्रमे आरण्यकग्रन्था उपकारकाः सिद्ध्यन्ति । उपनिषद्-शब्दस्य अर्थः 'ब्रह्मविद्या' अस्ति । उपनिषद् अध्यात्मविद्यया रहस्यप्रतिपादको वेदभागो विद्यते । उपनिषत्सु वेदानां सारभूताः सिद्धान्ताः प्रतिपादिताः सन्ति । तासु महर्षयः गूढतमानां रहस्यानां विशदतया विचारं कुर्वाणाः प्राप्यन्ते । आत्मनो निरूपणं उपनिषदां प्रमुखं प्रयोजनमस्ति । उपनिषद् पराविद्या अपि कथ्यते । उपनिषदः ब्रह्मबोधिकाः, मोक्षसाधनानि, दुःखत्रयविनाशिकाश्च मन्यन्ते । उपनिषद् वेदस्य अन्तभागतया 'वेदान्तः' अपि उच्यते । चतुर्षु आश्रमेषु अन्तिमे संन्यासाश्रमे उपनिषदः सर्वोपयोगिन्यो भवन्ति ।

(क) वेदस्य प्रथमो भागः ....................... उच्यते । (संहिता, ब्राह्मणम्)

(ख) वानप्रस्थाश्रमे ....................... बहूपयोगि भवति । (ब्राह्मणम्, आरण्यकम्)

(ग) ....................... वेदान्तः कथ्यते । (आरण्यकम्, उपनिषद्)

(घ) ब्राह्मणं वेदस्य ....................... भागः स्वीक्रियते । (द्वितीयः, चतुर्थः)

(ङ) ....................... वेदानां सारभूताः सिद्धान्ताः प्रतिपादिताः सन्ति । (संहितासु, उपनिषत्सु)

वेदहरूका चार भाग छन्- संहिता, ब्राह्मण, आरण्यक र उपनिषद् । पहिलो संहिता भाग मन्त्रहरूको सङ्ग्रह हो । अन्य तिन भाग संहिताको व्याख्याका लागि निर्माण

गरिएका हुन् । संहिता भागको उपयोगिता चार आश्रममध्ये पहिलो ब्रह्मचर्य आश्रममा बढी हुन्छ । दोस्रो ब्राह्मण भागले यज्ञको स्वरूप निर्धारण गर्छ । ब्राह्मण ग्रन्थहरूमा मन्त्रहरूको र यज्ञका विधिहरूको गहिरो रूपमा प्रतिपादन गरिएको छ । ब्राह्मण साहित्य गद्यशैलीमा लेखिएको छ जुन निकै ठूलो र व्यापक छ । यसको उपयोगिता गृहस्थाश्रममा बढी मानिन्छ । आरण्यक विज्ञान र अध्यात्म ज्ञानको बोध गराउने वेदको भाग हो । यसमा यज्ञको आध्यात्मिक र दार्शनिक पक्षको विवेचना गरिएको छ । वानप्रस्थ आश्रममा पढिएका आध्यात्मिक चिन्तनधारा नै आरण्यक हुन् । आरण्यकले यज्ञको लुकेको रहस्यलाई उजागर गर्दछ । आरण्यक ग्रन्थहरू वानप्रस्थ आश्रममा उपकारक सिद्ध हुन्छन् । उपनिषद् शब्दको अर्थ ब्रह्मविद्या हो । उपनिषद् अध्यात्मविद्याको प्रतिपादन गर्ने वेदको भाग हो । उपनिषद्हरूमा वेदका सारभूत सिद्धान्तहरूको प्रतिपादन गरिएको छ । ती विषयमा महर्षिहरू गूढतम रहस्यबारे विचार गरिरहेका देखिन्छन् । उपनिषद्हरूको प्रमुख प्रयोजन आत्माको निरूपण गर्नु हो । उपनिषद्लाई पराविद्या पनि भनिन्छ । उपनिषद्हरूलाई ब्रह्मविद्याका बोधक, मोक्षका साधन र तिनओटै दुःखका विनाशक मानिन्छ । वेदको अन्तिम भाग भएकाले उपनिषद् वेदान्त नामले पनि प्रसिद्ध छ । चार आश्रममध्ये अन्तिम संन्यास आश्रममा उपनिषद्हरू बढी उपयोगी सिद्ध हुन्छन् ।

४. प्रदत्तस्य अनुच्छेदस्य श्लोकयोश्च सस्वरं मौनं च पठनं विधाय प्रश्नान् उत्तरयत

शिक्षा, कल्पः, व्याकरणम्, निरुक्तम्, छन्दः, ज्योतिषम् इत्येतानि वेदाङ्गानि सन्ति । षट् अङ्गानि सन्तीति कारणेन वेदः षडङ्ग उच्यते । अङ्गशब्दस्यार्थः 'उपकारकः' भवति । वेदार्थज्ञानाय येषां शास्त्राणाम् आवश्यकता भवति, तानि एव शास्त्राणि वेदाङ्गानि कथ्यन्ते । अतो वेदाङ्गानि वेदानां सम्यगवबोधाय विरचितानि सन्तीति विज्ञायते । वेदमन्त्राः प्रायेण छन्दोबद्धाः सन्ति परन्तु सर्वाण्यपि वेदाङ्गानि गद्ये लिखितानि सन्ति । वेदाङ्गानि वैदिकोत्तरकाले विरचितानि सन्ति । वेदाङ्गेषु शिक्षा वेदस्य घ्राणम् (नासिका) वर्तते । कल्पो वेदस्य हस्तः (द्वौ हस्तौ) अस्ति । व्याकरणं वेदस्य मुखं विद्यते । छन्दो वेदस्य पादः (द्वौ पादौ) उच्यते । निरुक्तं वेदस्य श्रोत्रम् (द्वौ कर्णौ) कथ्यते । ज्योतिषं वेदस्य चक्षुः (द्वे नयने) मन्यते । अत एतेषामङ्गानाम् अध्ययनानन्तरं वेदस्य अध्ययने कृते एव वेदार्थस्य तन्निहितस्य विपुलज्ञानस्य च सम्यगववोधं कर्तुं शक्यते । पाणिनीयशिक्षायां विषयोऽयं निम्नप्रकारेण उपस्थापितो विद्यते-

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

(अ) एकपदेन उत्तरं लिखत

(क) निरुक्तं वेदस्य किम् अङ्गं वर्तते ?

(ख) वेदाङ्गानि कति ?

(ग) वेदस्य मुखं किमस्ति ?

(घ) अङ्गशब्दस्य कोऽर्थः ?

(ङ) वेदाङ्गानि गद्ये पद्ये वा लिखितानि सन्ति ?

(आ) परस्परं मेलयत

| | |
|---|---|
| वेदस्य नासिका | शिक्षा |
| वेदस्य कर्णौ | व्याकरणम् |
| वेदस्य पादौ | छन्दः |
| वेदस्य नयने | निरुक्तम् |
| वेदस्य मुखम् | कल्पः |
| वेदस्य हस्तौ | ज्योतिषम् |

(इ) पूर्णवाक्येन उत्तरं लिखत

(क) कानि वेदाङ्गानि ?

(ख) वेदार्थज्ञानाय केषां पूर्वज्ञानम् आवश्यकं भवति ?

(ग) वेदस्य अध्ययनं कथं करणीयम् ?

(घ) श्लोकयोः प्रयुक्तानि त्रीणि क्रियापदानि लिखत ।

शिक्षा, कल्प, व्याकरण, छन्द, निरुक्त र ज्योतिष वेदाङ्ग हुन् । छ ओटा अङ्ग भएका कारण वेदलाई षडङ्ग भनिन्छ । अङ्ग शब्दको अर्थ उपकारक हुन्छ । वेदको अर्थज्ञानका लागि जुन जुन शास्त्रको आवश्यकता पर्दछ, ती शास्त्र नै वेदाङ्ग हुन् । यसबाट वेदाङ्गहरू वेदलाई राम्ररी बुझ्न लेखिएका हुन् भन्ने थाहा हुन्छ ।

वेदाङ्गहरूमध्ये शिक्षा वेदको नाक हो । कल्प वेदको हात हो । व्याकरण वेदको मुख हो । छन्द वेदको खुट्टा हो । निरुक्त वेदको कान हो । ज्योतिष वेदको आँखा हो । यी अङ्गहरूको अध्ययन गरिसकेपछि वेदको अध्ययन गरेमा मात्र वेदलाई सही तरिकाले बुझ्न सकिन्छ । पाणिनीय शिक्षामा यही बताइएको छ । पाणिनीय शिक्षाअनुसार षडङ्गसहित वेद पढेमा मात्र ब्रहमलोक प्राप्त गर्न सकिन्छ ।

५. प्रदत्तमनुच्छेदं पठित्वा अधस्तनवाक्यानां युक्तत्वायुक्तत्वं समुचितचिह्नाभ्यां निर्णयत

वेदाङ्गेषु शिक्षाग्रन्थस्य प्रमुखमुद्देश्यं वेदमन्त्राणां समुचितमुच्चारणं विद्यते । अत इदं वेदाङ्गमुच्चारणशास्त्रं वर्तते । वेदमन्त्राणां यथायथोच्चारणम् अत्यावश्यकं भवति । अतो वेदाध्ययने उदात्तानुदात्तस्वरितानां स्वरभेदानां तेषां शुद्धोच्चारणविधेश्च ज्ञानं परमावश्यकं भवति । अस्मिन् उच्चारणकर्मणि उपकारकं वेदाङ्गं शिक्षाग्रन्थरूपेण प्रसिद्धमस्ति । तस्य चानेके ग्रन्थाः सन्ति । तेषु ग्रन्थेषु वर्णानां पदानां वा शुद्धोच्चारणविधिः शिक्षितो विद्यते । वैदिकशिक्षाग्रन्थेषु ऋग्वेदस्य पाणिनीय-शिक्षा सुप्रसिद्धा वर्तते । महर्षिपाणिनिना कृतोऽयं ग्रन्थो 'वर्णोच्चारणशिक्षा' इति नाम्नापि परिचीयते । एवमेव कृष्ण यजुर्वेदस्य व्यासशिक्षा, शुक्लयजुर्वेदस्य याज्ञवल्क्यशिक्षा, सामवेदस्य गौतमी, लोमशी, नारदीया च शिक्षा, अथर्ववेदस्य माण्डूकी शिक्षा चेत्यादयः शिक्षाग्रन्था उपलब्धाः सन्ति । पाणिनीयशिक्षायां शिक्षाग्रन्थो वेदस्य नासिकारूपेण वर्णितो विद्यते ।

(क) शिक्षा उच्चारणशास्त्रं वर्तते ।

(ख) याज्ञवल्क्यशिक्षा कृष्णयजुर्वेदस्य शिक्षाग्रन्थोऽस्ति ।

(ग) वर्णोच्चारणशिक्षा व्यासमुनिना विरचितो विद्यते ।

(घ) शिक्षाग्रन्थस्य प्रयोजनं वैदिकपदानां व्युत्पादनं वर्तते ।

(ङ) वैदिकमन्त्राणां यथायथोच्चारणम् अपरिहार्य मन्यते ।

वेदाङ्गहरूमा शिक्षा ग्रन्थको प्रमुख उद्देश्य वेदका मन्त्रहरूको शुद्ध उच्चारण हो । त्यसैले यो वेदाङ्गलाई उच्चारण शास्त्र पनि भनिन्छ । वेदका मन्त्रहरूको सही उच्चारण गर्नु अति आवश्यक छ । त्यसैले वेदको अध्ययनमा स्वरवर्णका उदात्त, अनुदात्त र स्वरित भेद र तिनको उच्चारण विधिको ज्ञान हुनु अनिवार्य छ । यो उच्चारण कार्यमा उपकारक वेदाङ्ग शिक्षाग्रन्थ नामले प्रसिद्ध छ । शिक्षाका धेरै

ग्रन्थहरू छन् । तिनीहरूमा वर्ण र पदको शद्धोच्चारण विधि सिकाइएको छ । वैदिक शिक्षा ग्रन्थहरूमा ऋग्वेदअन्तर्गत मानिने पाणिनीय शिक्षा सुप्रसिद्ध छ । महर्षि पाणिनिद्वारा लेखिएको यो ग्रन्थ वर्णोच्चारण शिक्षा नामले पनि परिचित छ । कृष्ण यजुर्वेदको व्यासशिक्षा, शुक्लयजुर्वेदको याज्ञवल्क्यशिक्षा, सामवेदको गौतमी, लोमशी र नारदीय शिक्षा, अथर्ववेदको माण्डूकी शिक्षा लगायत शिक्षा ग्रन्थहरू उपलब्ध छन् । पाणिनीय शिक्षामा शिक्षा ग्रन्थलाई वेदको नाकको रूपमा वर्णन गरिएको छ ।

६. पाठस्य मौनपठनं विधाय अज्ञातार्थानि पदानि रेखाङ्कितानि कुरुत ।

७. अधस्तनमनुच्छेदम् उच्चैः पठित्वा कक्षायां श्रावयत

वेदाध्ययनस्य मुख्यप्रयोजनं यज्ञयागादिकस्य कर्मकाण्डस्यानुष्ठानमपि अस्ति । एतस्मिन्नर्थे प्रवृत्तस्य वेदाङ्गस्य नाम 'कल्पः' इत्यस्ति । अङ्गमिदं वेदस्य हस्तरूपेण स्वीक्रियते । कल्पो वेदविहितानां कर्मणाम् आनुपूर्व्येण कल्पनाशास्त्रं विद्यते । शास्त्रेऽस्मिन् वैदिककर्मकाण्डस्य तद्विधीनाञ्च वर्णनमुपलभ्यते । ग्रन्थोऽयं सूत्ररूपेण लिखितमस्ति । अतोऽयं 'कल्पसूत्रम्' इति नाम्नापि प्रसिद्धो वर्तते । अस्य प्रमुखरूपेण त्रयो भेदाः सन्ति- श्रौत्रसूत्रम्, गृहयसूत्रम्, धर्मसूत्रं च । श्रौत्रसूत्रेषु श्रुतिप्रतिपादितानां दर्श-पौर्णमास्य-चातुर्मास्य-सोमयाग-वाजपेय-राजसूयाश्वमेधादीनां श्रौत्रयज्ञानां तदनुष्ठानविधीनां च क्रमबद्धं वर्णनं विहितमस्ति । गृहयसूत्रेषु गृहस्थजीवनसम्बद्धानां संस्काराणाम्, गृहाग्नौ सम्पादनीयानां यज्ञानाम्, तदनुष्ठानविधीनां च विवरणमुपलभ्यते । तथैव धर्मसूत्रेषु समाजसम्बद्धविषया वर्णिताः सन्ति । तत्र सामाजिकाचारविचारयोः, कर्तव्याकर्तव्ययोः, वर्णानाम्, आश्रमाणां च वैदिककालीनस्वरूपं वर्णितं विद्यते । शासनव्यवस्था, राजधर्म, धर्माधर्मौ, दण्डव्यवस्था इत्यादिषु विषयेष्वपि विधानं तत्र प्राप्यते । अस्य 'शुल्बसूत्रम्' इति नामकोऽपरोऽपि भेदः स्वीकृतो दृश्यते । ज्यामितीय ज्ञानसम्बद्धे एतस्मिन् भागे यज्ञस्य कृते वेदीनिर्माणप्रकारः शिक्षितो वर्तते ।

वेदको अध्ययनको मुख्य प्रयोजन यज्ञ आदिमा कर्मकाण्डको अनुष्ठान गर्नु पनि हो । यसका निमित्त समर्पित वेदाङ्को नाम कल्प हो । कल्पलाई वेदको हात मानिन्छ । यो वेदले विधान गरेका कर्महरूको क्रमैले कल्पना गर्ने शास्त्र हो । यो शास्त्रमा वैदिक कर्मकाण्ड र त्यसका विधिहरूको वर्णन गरेको पाइन्छ । यो ग्रन्थ सूत्र शैलीमा लेखिएको छ । त्यसैले यो कल्पसूत्र नामले पनि प्रसिद्ध छ । यसका प्रमुख रूपमा तिनओटा प्रकार छन्- श्रौत्रसूत्र, गृहयसूत्र र धर्मसूत्र । श्रौत्रसूत्रमा

वेदले प्रतिपादन गरेका दर्श, पौर्णमास्य, चातुर्मास्य, सोमयाग, वाजपेय, राजसूय, अश्वमेध आदि श्रौत्र यज्ञहरू र तिनको अनुष्ठान विधिको क्रमबद्ध वर्णन गरिएको छ । गृहयसूत्रमा गृहस्थजीवनसम्बद्ध संस्कारहरू, घरमा सम्पादन गर्नुपर्ने यज्ञहरू र तिनको अनुष्ठान विधिको विवरण उपलब्ध छ । त्यसै गरी धर्मसूत्रमा समाजसित सम्बन्धित विषयहरूको वर्णन गरिएको छ । त्यसमा सामाजिक आचार-विचार, गर्न हुने र नहुने कामहरू, वर्ण र आश्रमसम्बन्धी वैदिक स्वरूपको वर्णन गरिएको छ । शासनव्यवस्था, राजधर्म, धर्म र अधर्म, दण्डव्यवस्था आदि विषयको निर्धारण गरिएको छ । कल्पको शुल्वसूत्र नामको चौथो प्रकार पनि भेटिन्छ । ज्यामितीय ज्ञान दिइएको यो भागमा यज्ञका निमित्त वेदी निर्माणको विधि सिकाइएको छ ।

८. अधस्तनं श्लोकं पठित्वा शिक्षकसाहाय्येन नेपालिभाषायाम् अर्थ प्रकाशयत

छन्दोभूतमिदं सर्वं वाङ्मयं स्याद् विजानतः ।
नाच्छन्दसि न चापृष्टे शब्दश्चरति कश्चन ॥

९. सारिणी विलोक्य प्रश्नान् उत्तरयत

| वेदः | शाखाः | प्रमुखः आचार्यः | ऋत्विक् | प्रमुखदेवता | मन्त्रसङ्ख्या | उपवेदः |
|---|---|---|---|---|---|---|
| ऋक् | २१ | पैलः | होता | अग्निः | १०५८० | आयुर्वेदः |
| यजुः | १०० | वैशम्पायनः | अध्वर्युः | वायुः | | धनुर्वेदः |
| साम | १००० | जैमिनिः | उद्गाता | आदित्यः | १८७५ | गान्धर्ववेदः |
| अथर्व | ९ | सुमन्तुः | ब्रह्मा | सोमः | ५९८७ | स्थापत्यवेदः |

(क) सामवेदस्य कति शाखाः सन्ति ?

(ख) यजुर्वेदस्य प्रमुखाचार्यः कः ?

(ग) वायुः कस्य वेदस्य प्रमुखदेवता अस्ति ?

(घ) ऋग्वेदे कति मन्त्राः सन्ति ?

(ङ) यजुर्वेदस्य उपवेदः कः ?

(च) सामवेदस्य ऋत्विजो नाम किम् ?

## लेखनम्

१. पाठस्य चतुर्थस्य अनुच्छेदस्य पदच्छेदसहितम् अनुलेखनं कुरुत ।

२. पुस्तकमवलम्ब्य शब्दानामर्थं लिखत

वेदः, सर्वप्राचीनम्, अध्वर्युः, सामसंहिता, वेदाङ्गम्, ऋत्विक्, गानम्

३. अधस्तनमनुच्छेदं पठित्वा तदनुवर्तिनः प्रश्नान् पूर्णवाक्येन उत्तरयत

व्याकरणं वेदाङ्गेषु प्रमुखमङ्गं मन्यते । षडङ्गस्य वेदस्य मुखं व्याकरणमस्तीति पाणिनिमुनिना शिक्षाग्रन्थे वर्णितं वर्तते । व्याकरणं शब्दशास्त्रं विद्यते यतोऽत्र शब्दा व्युत्पाद्यन्ते । अत्र धातुषु शब्देषु च विविधेष्वर्थेषु विविधानां प्रत्ययानां योजनेन शब्दा निर्मीयन्ते । समासादिप्रक्रियया चात्र शब्दानां व्युत्पादनं भवति । लिङ्गानुशासनं च व्याकरणस्य प्रमुखो विषयो विद्यते । वाक्येषु कारकविभक्तीनां समुचितप्रयोगस्य ज्ञानं व्याकरणादेव लभ्यते । धातु-शब्दरूपाणां निष्पादनाय तेषां समुचितप्रयोगाय च व्याकरणाध्ययनम् आवश्यकं भवति । संस्कृतभाषायां पदत्वमापन्नाः साधुशब्दा एव वाक्ये प्रयोगार्हा भवन्ति । अतः अर्थान्वेषणपूर्वकं शब्दसाधुत्वप्रकाशनं साध्वसाधुप्रयोगनिर्णयश्च व्याकरणस्य मूलभूतं प्रयोजनं वर्तते । शब्दानामर्थस्य, सन्धिव्यवस्थायाः, प्रकृति-प्रत्ययादीनां च समुचितं ज्ञानं व्याकरणेन विना न सम्भवति । अतः वेदानां सम्यग्ज्ञानाय व्याकरणस्य ज्ञानमपरिहार्यं मन्यते । इन्द्रः, चन्द्रः, काशकृत्स्नः, आपिशलिः, शाकटायनः, पाणिनिः, अमरः, जैनः इति एते संस्कृतभाषायाः प्रसिद्धा व्याकरणकाराः सन्ति । तेषु पाणिनिना विरचितम् 'अष्टाध्यायी' इति नामकं व्याकरणं सर्वथा प्रामाणिकमस्ति । ग्रन्थोऽयं क्रमबद्धानां सूत्राणां सङ्ग्रहो विद्यते । महर्षिपतञ्जलिना प्रणीतं 'महाभाष्यम्' पाणिनीयव्याकरणस्य अपरः प्रसिद्धो ग्रन्थो वर्तते । ग्रन्थेऽस्मिन् अष्टाध्यायीग्रन्थस्य व्याख्या विस्तरेण विहिता विद्यते । पाणिनिः, कात्यायनः, पतञ्जलिः च पाणिनीयव्याकरणस्य त्रिमुनयः सन्ति । पाणिनीयव्याकरणे वैदिकानां लौकिकानां च प्रयोगाणां साधनं विहितमस्ति । शास्त्रमिदं सर्वविधशास्त्राणां संरक्षकम् उपकारकं च मन्यते ।

(क) वेदस्य मुखरूपम् अङ्गं किम् ?

(ख) व्याकरणं किमर्थं शब्दशास्त्रं कथ्यते ?

(ग) पाणिनीयव्याकरणस्य त्रिमुनयः के ?

(घ) पाणिनिना विरचितस्य व्याकरणग्रन्थस्य नाम किम् ?

(ङ) ‘महाभाष्यम्’ केन प्रणीतम् ?

(च) संस्कृतभाषायाः पञ्चानां प्रसिद्धानां व्याकरणकाराणां नामानि लिखत ।

(छ) कीदृशाः शब्दा वाक्ये प्रयोगार्हा भवन्ति ?

व्याकरण वेदाङ्गहरूमध्ये प्रमुख अङ्ग हो । षडङ्ग वेदको मुख व्याकरण भएको पाणिनि ऋषिले शिक्षा ग्रन्थमा वर्णन गरेका छन् । व्याकरण शब्दशास्त्र हो किनकि यसमा शब्दको व्युत्पादन गरिन्छ । व्याकरणमा धातु र शब्दमा विविध अर्थमा विविध प्रत्यय जोडेर शब्दको निर्माण गरिन्छ । समास आदि प्रक्रियाबाट पनि शब्दको व्युत्पादन हुन्छ । लिङ्गानुशासन व्याकरणको प्रमुख विषय हो । वाक्यमा कारक र विभक्तिको समुचित प्रयोगको ज्ञान व्याकरणबाट नै प्राप्त हुन्छ । धातु र शब्दको रूप निर्माण गर्न र तिनको प्रयोग गर्न व्याकरणको अध्ययन आवश्यक हुन्छ । संस्कृत भाषामा पद बनेका सिद्ध शब्द मात्र वाक्यमा प्रयोगका लागि योग्य हुन्छन् । त्यसैले अर्थको अन्वेषण गरेर शब्दहरूको सिद्धिप्रक्रिया प्रदर्शन गर्नु र शुद्ध र अशुद्ध प्रयोगको निर्णय गर्नु व्याकरणको प्रमुख प्रयोजन हो । शब्दार्थ, सन्धिव्यवस्था, प्रकृति-प्रत्यय आदिको ज्ञान व्याकरणको अध्ययन विना सम्भव छैन । त्यसैले वेदको वास्तविक ज्ञानका लागि व्याकरणको ज्ञान अपरिहार्य मानिन्छ । इन्द्र, चन्द्र, काशकृत्स्न, आपिशली, शाकटायन, पाणिनि, अमर, जैन आदि संस्कृतभाषाको व्याकरणका प्रसिद्ध सर्जक हुन् । उनीहरूमध्ये पाणिनिद्वारा रचित अष्टाध्यायी नामको व्याकरण सबै दृष्टिकोणले प्रामाणिक छ । यो ग्रन्थ सूत्रहरूको क्रमबद्ध सङ्ग्रह हो । महर्षि पतञ्जलिद्वारा रचित महाभाष्य पाणिनीय व्याकरणको अर्को प्रसिद्ध ग्रन्थ हो । यो ग्रन्थमा अष्टाध्यायीको विस्तृत व्याख्या गरिएको छ । पाणिनि, कात्यायन र पतञ्जलि पाणिनीय व्याकरणका त्रिमुनि हुन् । पाणिनीय व्याकरणमा वैदिक र लौकिक दुवै खाले प्रयोगहरू सिद्ध गरिएका छन् । यो शास्त्र सबै प्रकारका शास्त्रहरूको संरक्षक र उपकारक मानिन्छ ।

४. कोष्ठकस्थपदस्य साहाय्येन ‘वेदनिर्दिष्टमनुशासनम्’ पाठाद् उत्तराणि लिखत

(क) मातरि कीदृशो व्यवहारः कर्तव्यः ? (देववत्)

(ख) अस्माभिः काभ्यां न प्रमदितव्यम् ? (स्वाध्याय, प्रवचन)

(ग) कीदृशानि कर्माणि सेवितव्यानि ? (अनवद्य)

(घ) अतिथिः केन तुल्यो भवति ? (देव)

(ङ) अस्माभिः किं वदितव्यम् ? (सत्य)

५. अधस्तनमनुच्छेदम् अभ्यासपुस्तिकायाम् अनुलिख्य पञ्च प्रश्नान् निर्मात

निरुक्तं नाम वेदाङ्गविशिष्टो ग्रन्थो विद्यते । अस्य रचना महर्षिणा यास्केन विहिता वर्तते । अस्य ग्रन्थस्य प्रयोजनं वैदिकपदानां व्युत्पत्तिप्रतिपादनमस्ति । इदं शास्त्रं शब्दार्थयोर्मध्ये अर्थस्य प्रधानत्वं साधयति । ग्रन्थोऽयं निघण्टुनामकस्य ग्रन्थस्य टीकाग्रन्थो विद्यते । निघण्टुस्तु वैदिककोशोऽस्ति यत्र केवलं वैदिकाः शब्दाः परिगणिताः सन्ति । ग्रन्थेऽस्मिन् वेदमन्त्रेषु प्रयुक्तानां पदानामर्थज्ञानस्य प्रक्रिया वर्णिता अस्ति । एकैकस्य पदस्य सम्भाविता अवयवार्था यत्र निःशेषेण उच्यते तद् निरुक्तं कथ्यते । निरुक्तस्य सर्वमान्यमतमस्ति यत्- प्रत्येकं शब्दः केनाऽपि धातुना सह अवश्यमेव सम्बद्धो भवति । अतः निरुक्तानुसारेण सर्वे शब्दा व्युत्पन्ना भवन्ति । अन्यानि वेदाङ्गानि वेदस्य बहिर्भूतानि तत्त्वानि व्याकुर्वन्ति, तर्हि निरुक्तं वेदस्य अन्तर्भूतानां तत्त्वानां व्युत्पादनं करोति । अन्ये वेदाङ्गग्रन्थाः सूत्रशैल्यामुपनिबद्धाः प्राप्यन्ते परन्तु निरुक्तं गद्यशैल्यां निबद्धो विद्यते । निरुक्तं भाषाविज्ञानस्य आधारग्रन्थो विद्यते । अस्मिन् भाषाविज्ञानस्य सिद्धान्तानां वैज्ञानिकरीत्या निरूपणं कृतं विद्यते । यास्कात् पूर्वमपि अनेके निरुक्तकारा अभूवन् परन्तु इदानी यास्कीयनिरुक्तमेव उपलब्धं विद्यते । महर्षिणा यास्केन स्वनिरुक्तग्रन्थे द्वादशानां निरुक्तकाराणां नामानि तेषां मतानि च निर्दिष्टानि सन्ति ।

निरुक्त वेदाङ्गमध्येको एक ग्रन्थ हो । यसको रचना महर्षि यास्कले गरेका हुन् । यो ग्रन्थको प्रयोजन वैदिक पदहरूको व्युत्पत्ति निर्धारण गर्नु हो । यो शास्त्रले शब्द र अर्थमध्ये अर्थको प्रधानतालाई सिद्ध गर्दछ । यो ग्रन्थ निघण्टु नामक ग्रन्थको व्याख्याको रूपमा लेखिएको ग्रन्थ हो । निघण्टु वैदिक कोश हो जहाँ केवल वैदिक शब्दहरूको मात्र सङ्ग्रह गरिएको छ । यो ग्रन्थमा वेदमन्त्रहरूमा प्रयोग भएका पदहरूको अर्थज्ञान गर्ने तरिका वर्णन गरिएको छ । निरुक्तमा एक-एक पदको सम्भावित अर्थ जहाँ सम्पूर्ण रूपमा बताइन्छ । निरुक्तको सर्वमान्य मत छ- प्रत्येक शब्द कुनै न कुनै धातुसित सम्बन्धित हुन्छ । त्यसैले निरुक्तका अनुसार सबै शब्द व्युत्पन्न हुन्छन् । अन्य वेदाङ्गहरूले वेदका बाहिरी तत्त्वहरूको व्याख्या गर्छन् भने निरुक्तले वेदमा अन्तर्भूत तत्त्वहरूको व्युत्पादन गर्छ । अन्य वेदाङ्ग ग्रन्थहरू सूत्र रूपमा लेखिएका छन् तर निरुक्त गद्यशैलीमा लेखिएको छ । निरुक्त भाषाविज्ञानको आधार ग्रन्थ हो । यसमा भाषाविज्ञानका सिद्धान्तहरूको वैज्ञानिक रूपले निरूपण गरिएको छ । यास्कभन्दा पहिले पनि अनेक निरुक्तकार

थिए तर अहिले यास्कले लेखेको निरुक्त मात्र उपलब्ध छ । महर्षि यास्कले आफ्नो निरुक्त ग्रन्थमा बाह्र जना निरुक्तकारको नाम र उनीहरूको मत उल्लेख गरेका छन् ।

६. प्रदत्तानि पदानि शुद्धानि विधाय अभ्यासपुस्तिकायां लिखत

अथर्वबेदः, ऋक्समि्हता, शुमन्तुः, वेदत्रयि, स्रुतिः, ब्राम्हणम्

७. प्रदत्तानां पदानां वाक्ये प्रयोगं दर्शयत

ज्ञानम्, मन्त्रः, वद, उद्गाता, उपनिषद्, वाङ्मयम्

८. पाठाधारेण एकवाक्येन उत्तरं लिखत

(क) वेदाः कति सन्ति ?

(ख) वेदशब्दस्य कोऽर्थः ?

(ग) को वेदानां विभाजनम् अकरोत् ?

(घ) विश्वस्य आदिमो ग्रन्थः कः ?

(ङ) वेदस्य तृतीयस्य भागस्य नाम किम् ?

(च) सामवेदस्य अधिकतरा मन्त्राः कुतः गृहीताः सन्ति ?

(छ) पाठे 'साहित्यम्' इत्यर्थे किं पदं प्रयुक्तं वर्तते ?

(ज) 'गोपथम्' कस्य वेदस्य ब्राहमणं वर्तते ?

(झ) जैमिनिः केन वेदेन सम्बद्धं नाम अस्ति ?

(ञ) यजुर्वेदसंहिताया द्वौ भागौ कौ ?

९. पाठाधारेण प्रश्नान् उत्तरयत

(क) चतुर्णा वेदानां नामानि कानि ?

(ख) 'त्रयी' इति पदं केषां वेदानां बोधकमस्ति ? तेन कस्य वेदस्य ग्रहणं न भवति ?

(ग) उपवेदाः के सन्ति ?

(घ) वेदानां चत्वारो भागाः के ?

(ङ) चतसृणां संहितानां नामानि लिखत ।

(च) किं नाम ऋत्विक् ?

(छ) वेदानां तेषां ऋत्विजानां च नामानि सारिण्यां प्रदर्शयत ।

(ज) वेदव्यासः कं कं मुनिं कं कं वेदम् अध्यापितवान् ? सारिण्यां दर्शयत ।

(झ) अथर्ववेदस्य वैशिष्ट्यं त्रिषु वाक्येषु लिखत ।

(ञ) वेदः किमर्थं श्रुतिः उच्यते ?

१०. सप्तसु वाक्येषु वैदिकवाङ्मयस्य परिचयं दत्त ।

११. पाठाधारेण वैदिकानामनुशासननियमानां सूची निर्मात ।

## व्याकरणानुशीलनम्

१. प्रदत्ताया रूपावल्याः सहयोगेन प्रश्नान् उत्तरयत

ज्ञान-शब्दस्य रूपाणि-

| एकवचनम् | द्विवचनम् | बहुवचनम् | |
|---|---|---|---|
| ज्ञानम् | ज्ञाने | ज्ञानानि | - प्रथमा |
| ज्ञानम् | ज्ञानानि | ज्ञानानि | - द्वितीया |
| ज्ञानेन | ज्ञानाभ्याम् | ज्ञानैः | - तृतीया |
| ज्ञानाय | ज्ञानाभ्याम् | ज्ञानेभ्यः | - चतुर्थी |
| ज्ञानात्-द् | ज्ञानाभ्याम् | ज्ञानेभ्यः | - पञ्चमी |
| ज्ञानस्य | ज्ञानयोः | ज्ञानानाम् | - षष्ठी |
| ज्ञाने | ज्ञानयोः | ज्ञानेषु | - सप्तमी |
| हे ज्ञान ! | हे ज्ञानौ ! | हे ज्ञानाः ! | - सम्बोधनम् |

(अ) शब्दरूपावलिं निर्मात

| | | |
|---|---|---|
| यथा- | वाङ्मय- वाङ्मयस्य | अध्ययन- अध्ययनस्य |
| पठनेन | वाङ्मय- ................ | अध्ययन- ................ |
| फलानि | ब्राह्मण- ................ | आरण्यक- .............. |
| पुस्तके | नयन- ................ | भोजन- ................ |
| कार्यम् | विधान- ................ | साहित्य- ................ |
| मित्राणि | शास्त्र- ................ | पुष्प- ................ |

(आ) प्रश्नान् उत्तरयत

(क) मुख-शब्दस्य तृतीयाया एकवचने किं रूपम् ?

(ख) व्याकरण-शब्दस्य प्रथमाविभक्ते रूपाणि लिखत ।

(ग) निरुक्त-शब्दस्य द्वितीयाविभक्ते कानि रूपाणि ?

(घ) 'शास्त्राणाम्' इति पदस्य एकवचनरूपं किम् ?

(ङ) 'महत्वम्' इति पदं कस्मिन् लिङ्गे अस्ति ?

## २. कोष्ठकस्थं सङ्केतमनुसृत्य रिक्तस्थानं पूरयत

(क) महर्षिणा व्यासेन अष्टादश .................. रचितानि । (पुराण- प्रथमाया बहुवचनम्)

(ख) वैदिकवाङ्मयम् ................ स्थानम् अलङ्करोति । (उन्नत- प्रथमाया एकवचनम्)

(ग) उद्गाता ................ स्वरेण सामगानं करोति । (मधुर- तृतीयाया एकवचनम्)

(घ) ब्रह्मणः प्रधानं कर्म यज्ञस्य ................ अस्ति । (निरीक्षण)

(ङ) ................ विविधानि पुष्पाणि विकसन्ति । (उपवन- सप्तम्या एकवचनम्)

(च) साधुः श्वेतानि ................ धारयति । (वस्त्र- द्वितीयाया बहुवचनम्)

(छ) अहं प्रियतमाय ................ साहाय्यं ददामि । (मित्र- चतुर्थ्या एकवचनम्)

(ज) छात्रैः ................ न प्रमदितव्यम् । (स्वाध्यायप्रवचन- पञ्चम्या द्विवचनम्)

## ३. उदाहरणमनुसृत्य निर्दिष्टकार्यकलापान् कुरुत

| विशेषणशब्दः | शुद्धरूपम् | तरप्-प्रत्ययान्तरूपम् | तमप्-प्रत्ययान्तरूपम् |
|---|---|---|---|
| प्राचीन | प्राचीनः | प्राचीनतरः | प्राचीनतमः |

प्रयोगः कल्पः प्राचीनो ग्रन्थो विद्यते ।

सामवेदः कल्पात् प्राचीनतरो गन्थो विद्यते ।

ऋग्वेदः सर्वेषां ग्रन्थानां प्राचीनतमो ग्रन्थो विद्यते ।

| | | | |
|---|---|---|---|
| उच्च | उच्चम् | उच्चतरम् | उच्चतमम् |

प्रयोगः अन्नपूर्णः उच्चं शिखरमस्ति ।

कञ्चनजङ्घा धौलागिरेः उच्चतरं शिखरमस्ति ।

सगरमाथा उच्चतमं शिखरमस्ति ।

दीर्घ		दीर्घा		दीर्घतरा
दीर्घतमा

प्रयोगः		कौशिकी दीर्घा नदी वर्तते ।
		गण्डकी कौशिक्या दीर्घतरा नदी वर्तते ।
		नाइलनाम्नी नदी सर्वासु नदीषु दीर्घतमा वर्तते ।

(अ) कोष्ठस्थशब्दस्य तरप्-प्रत्ययान्तपदैः रिक्तस्थानानि पूरयत

(क) सीता गीतायाः ...................... अस्ति । (चतुर)

(ख) अहं त्वत्तः ...................... अस्मि । (ज्येष्ठ)

(ग) सूर्यचन्द्रयोः सूर्यः ...................... विद्यते । (विशाल)

(घ) गुरुणा ...................... पाठाः पाठिताः । (अधिक)

(ङ) रामायणात् पुराणानि ...................... सन्ति । (प्राचीन)

(इ) कोष्ठस्थशब्दस्य तमप्-प्रत्ययान्तरूपैः रिक्तस्थानं पूरयत

(क) सर्वेषां सम्बन्धिनां माता ...................... भवति । (श्रेष्ठ)

(ख) वैदिकसाहित्यम् ...................... साहित्यमस्ति । (प्रचीन)

(ग) कक्षायाः छात्रेषु गणेशः ...................... वर्तते । (पटु)

(घ) अहं सफलतायै ...................... प्रयासं करोमि । (उच्च)

(ङ) अद्य वर्षस्य ...................... दिनं वर्तते । (उष्ण)

(इ) कोष्ठकात् समुचितं पदं चित्वा रिक्तस्थानं पूरयत

(क) नदीषु गङ्गा ...................... वर्तते । (पूजनीयतरा, पूजनीयतमा)

(ख) परधर्मग्रहणाद् निधनम् ...................... भवति । (श्रेयसितरम्, श्रेयसितमम्)

(ग) छात्रासु गौरी ...................... अस्ति । (पट्वितरा, पट्वितमा)

(घ) कुरुणां युधिष्ठिरः ...................... । (श्रेष्ठतरः, श्रेष्ठतमः)

(ङ) वैदिकवाङ्मयाद् लौकिकवाङ्मयम् ...................... (नवीनतरम्, नवीनतमम्)

## ४. पदानि प्रयुज्य वाक्यानि रचयत

श्वेततरः, बृहत्तमम्, महतितरा, शीततमा, लघुतमानि, विशालतराणि

## रचनात्मकः अभ्यासः

१. कोष्ठस्थानां क्रियापदानां सहयोगेन संस्कृते अनुवादं कुरुत

| |
|---|
| **अस्ति, स्तः, समायान्ति, मन्यते, मन्यन्ते** |

संस्कृत वाङ्मयका दुई भाग छन्- वैदिक वाङ्मय र लौकिक वाङ्मय । वैदिक वाङ्मय सबैभन्दा प्राचीन वाङ्मय हो । वेद र वेदसम्बन्धी विषयहरू वैदिक वाङ्मयअन्तर्गत पर्दछन् । वैदिककालभन्दा पछिको वाङ्मय लौकिक वाङ्मय हो । पुराण, दर्शन, स्मृतिग्रन्थ, महाभारत, रामायण आदि लौकिक साहित्य मानिन्छन् । लौकिक साहित्यको पनि मूल स्रोत भने वैदिक साहित्य नै मानिन्छ ।

२. अधस्नतपद्यस्य गद्ये रूपान्तरणं कुरुत

यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद् वेदाङ्गशास्त्राणां गणितं मूर्धनि स्थितम् ॥

३. प्रदत्तस्य पद्यस्याधारेण वेदाङ्गस्य ज्योतिषस्य विषये त्रीणि वाक्यानि लिखत

वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं यो ज्यौतिषं वेद स वेद यज्ञान् ॥

४. प्रदत्तपदानां साहाय्येन चतुर्षु वाक्येषु चित्रस्य वर्णनं कुरुत

| |
|---|
| यज्ञः, पर्यावरणस्य स्वच्छीकरणम्, विषाणूनां विनाशः, यज्ञात् पर्जन्यम्, पर्जन्याद् अन्नानि |

## चित्रसङ्केत :

**यज्ञ गरिरहेको झल्किने चित्र । यज्ञ गर्नाले वायु तथा पर्यावरण स्वच्छ भएको छ । विषणुरहित वातावरण छ । यज्ञका कारण वर्षा भएको छ । वर्षाका कारण अन्नहरू उब्जिएका छन् ।**

५. अन्तर्जालस्य सामाजिकसञ्जालादीनां च साहाय्येन वेदाङ्गस्य छन्दसो विषये अन्वेषणं विधाय तथ्यान् सङ्कलयत । तदनु शिक्षकस्य सहयोगेन 'वेदाङ्गः छन्दः' इति विषये एकमनुच्छेदं विरचय्य कक्षायां श्रावयत ।

## श्रवणपाठः

आर्यभटः पौरस्त्याया गणितपरम्पराया विज्ञानपरम्परायाश्च शिखरपुरुषो विद्यते । स ज्योतिर्विद् महान् गणितज्ञश्च आसीत् । स एव सूर्यसिद्धान्तस्य प्रवर्तको वर्तते । 'सूर्यः अचलो विद्यते, पृथिवी च चला अस्ति, पृथिवी स्वकीये अक्षे घूर्णति, सा सूर्य च परिभ्रमति' इति सुस्थापितः सिद्धान्तः सर्वप्रथमम् आर्यभटेनैव प्रवर्तितो विद्यते । ख्रिष्टाब्दस्य चतुर्थशताब्द्यामेव आर्यभटेन 'आर्यभटीयम्' इत्याख्ये स्वकीये ग्रन्थे सिद्धान्तोऽयं प्रतिपादित आसीत् । षट्सप्तत्यधिकचतुःशततमे ख्रिष्टाब्दे लब्धजन्म आर्यभटः त्रयोविंशतितमे वयसि ग्रन्थोऽयं व्यरचयत् । ग्रहणकारणमपि अनेनैव विदुषा प्रतिपादितम् । स 'सूर्य-चन्द्रग्रहणयोः कृते सूर्यः, चन्द्रः, पृथिवी चेति त्रीणि एव कारणानि, न तु राहुकेतू' इति गणितीयपद्धत्या प्रत्यपादयत् । पृथिवी सूर्य परिभ्रमति, चन्द्रश्च पृथिवी परिभ्रमति । उभयोः परिभ्रमणक्रमे सूर्य परितः भ्रमन्त्याः पृथिव्याः चन्द्रस्य परिक्रमापथेन संयोगाद् ग्रहणं सञ्जायते । तत्र क्रमे यदा पृथिव्याः छायापातेन चन्द्रस्य प्रकाशोऽवरुध्यते तदा चन्द्रग्रहणं दृश्यते । तथैव पृथिवीसूर्ययोर्मध्ये समागतस्य चन्द्रस्य छायापातेन सूर्यग्रहणमनुभूयते इति ग्रहणविषये आर्यभटस्य मतमासीत् । पश्चादाधुनिकैः वैज्ञानिकैः विहितेन अनुसन्धानेन आर्यभटस्य सिद्धान्तः प्रमाणीकृतः ।

द्वितीयः
पाठ

# जन्मदिनम्

विद्यालये प्रार्थनायाः समयः वर्तते । तत्र छात्राः पङ्क्तौ स्थिताः सन्ति । अग्रे शिक्षकाः पङ्क्तिबद्धाः वर्तन्ते । दीनदयालः अपि शिक्षकाणां समीपे उपस्थितः अस्ति । सः सप्तमकक्षायां पठति । अद्य तस्य जन्मदिवसः वर्तते । अतः सप्तमकक्षायाः छात्राः एकां पुष्पमालां आदाय आगताः सन्ति । छात्रेभ्यः मालाम् आदाय प्रधानाध्यापकः दीनदयालं मालां सन्धारयति । छात्राः तस्मिन् अवसरे शुभाशयान् प्रयच्छन्तः सन्ति । ते करतालं वादयन्तः गीतं गायन्तः तम् अभिनन्दन्ति -

शुभमस्तु जन्मदिनं सर्वमङ्गलम्
शान्तिरस्तु पुष्टिरस्तु दीर्घजीवनम् ।

मास्तु भयं व्याधिनाम्, वृद्धिरस्तु सम्पदाम्
शुद्धबुद्धचेतसा पूर्णमस्तु जीवनम् ।
शुभमस्तु जन्मदिनम् ........... ॥

विद्यालयमा प्रार्थना भइरहेको चित्र । अगाडि शिक्षकहरू उभिएका । एक जना विद्यार्थी पनि उभिएको र अरू सबै मिलेर उसलाई शुभकामना गीत गाएर अभिनन्दन गरिरहेको झल्किने चित्र ।

विद्यालयमा प्रार्थन चलिरहेको छ । विद्यार्थीहरू लामबद्ध भएर बसेका छन् । अगाडिको पङ्क्तिमा विद्यार्थीहरूतर्फ फर्केर शिक्षकहरू उभिएका छन् । दीनदयाल पनि शिक्षकहरूसँगै उभिएको छ । ऊ कक्षा सातको छात्र हो । आज उसको जन्मदिन हो । त्यसैले कक्षा सातका साथीरू मिलेर माला लिएर आएका छन् । प्रधानाध्यापकले माला लिएर दीनदयाललाई लगाइदिँदै हुनुहुन्छ । विद्यार्थी साथीहरू उसलाई शुभकामना दिइरहेका छन् । उनीहरू ताली बजाउँदै जन्मदिनको शुभकामना गीत गाइरहेका देखिन्छन् ।

## जन्मदिवसः (संवादः)

(सोलुखुम्बुमण्डले सगरमाथा-माध्यमिक-विद्यालयः अस्ति । पल्लवी शेर्पा, चेतना लामा, उत्कर्षः बानियाँ, प्रसन्नः ढुङ्गेलश्च तस्मिन् विद्यालये पठन्ति । ते सप्तमकक्षायाः छात्राः सन्ति । मध्यान्तरस्य समये ते परस्परं वार्तालापं कुर्वन्तः सन्ति ।)

चेतना - अयि पल्लवि ! त्वम् अद्य किमर्थं विलम्बेन विद्यालयं आगतवती ?

पल्लवी - एकम् रहस्यं वर्तते । प्रथमम् इदं मिष्टान्नं खादन्तु । (सा सर्वेभ्यः मोदकं प्रयच्छति ।)

चेतना - अहो ! अतीव मधुरं मोदकम् । मया तु एतादृशं मधुरं मिष्टान्नं पूर्वं न अनुभूतम् । कुत्र लभ्यते ?

पल्लवी - आपणे एतादृशं मिष्टान्नं न लभ्यते सखि चेतने ! एतत् तु मम मातुः पाककलायाः परिणामः अस्ति । अत एव एतत् स्वास्थ्यवर्धकं पुष्टिकारकं च अस्ति । मम माता सर्वदा गृहे एव मिष्टान्नं निर्मापयति ।

चेतना - अस्तु तावत् मिष्टान्नस्य माहात्म्यम् । वद अद्य को विशेषः ?

पल्लवी - अद्य मम जन्मदिवसः वर्तते । अतः विद्यालये आगमनाय विलम्बः अभवत् ।

सगरमाथा माध्यमिक विद्यालयको प्राङ्गणमा खेलिरहेका र अलि पर चार जना (दुई जना केटा र दुई जना केटी) कुराकानी गरिरहेको चित्र । चित्रमा एक जना केटीले अरूलाई मिठाइ दिइरहेको देखिने चित्र ।

चेतना - अहो ! आश्चर्यम्, जन्मदिवसस्य अनेके शुभाशयाः ! ह्यः किमर्थं न अवदः ?

पल्लवी - मयापि विस्मृतम्, सायङ्काले एव मम माता उक्तवती श्वः तव जन्मतिथिः वर्तते इति ।

प्रसन्नः - जन्मदिनं तु दिनाङ्कानुसारं भवति, तिथौ न ।

पल्लवी - नहि नहि, अस्माकं गृहे तिथ्यनुसारं जन्मोत्सवं मानयन्ति । एषा एव परम्परा वर्तते । चन्द्रमासानुसारम् एव जन्मदिवसः मन्यते ।

उत्कर्षः - अस्तु तर्हि, जन्मदिवसः तु मम अपि आसीत् गतमासे । किन्तु अहं विद्यालये समये आगत आसम् ।

पल्लवी - नहि नहि ! जन्मदिवसस्य अवसरे मम गृहे पूजा आसीत् । अहं देवदर्शनाय देवालयं अपि गतवती । अतः विलम्बः अभवत् ।

चेतना - जन्मदिवसे कस्य पूजा भवति ? मम अनुजस्य जन्मदिवसे तु पूजा नासीत् ।

पल्लवी - जन्मदिवसे अष्टचिरजीविनां पूजा भवति । अहं तु प्रतिवर्षं जन्मदिवसे अष्टचिरजीविनां पूजनं करोमि । देवालयं गत्वा देवदर्शनं च करोमि ।

प्रसन्नः - जन्मदिवसे देवदर्शनं किमर्थम् ? अहं तु न करोमि कदापि ।

पल्लवी - जन्मदिवसः विशेषः अवसरः वर्तते । विशेषे अवसरे देवानां दर्शनम् अस्माकं संस्कृतिः वर्तते ।

चेतना - देवदर्शनेन किं भवति ?

पल्लवी - देवाः अस्माकं रक्षां कुर्वन्ति इति मम माता वदति । देवानां दर्शनेन दीर्घायुः, सुस्वास्थ्यं च प्राप्तं भवति । जीवने सुखम्, समृद्धिः, ऐश्वर्यं च मिलति । कार्याणां सिद्धिः भवति । मनसि शान्तिः, उत्साहः च वर्धते ।

उत्कर्षः - आम्, मम पिता अपि तथा एव वदति । किन्तु चिरजीविनां पूजा कीदृशी भवति ?

पल्लवी - चिरजीविनः अष्टौ भवन्ति । ते चिरकालं जीवन्ति । तेषां मृत्युः शीघ्रं न आगच्छति । अतः तेषां पूजनेन अस्माकम् अपि आयुः दीर्घं भवति । वयं च चिरं जीवामः । आरोग्यं च प्राप्नुमः । अतः प्रतिवर्षं जन्मदिवसे चिरजीविनां

पूजा भवति अस्माकं गृहे ।

चेतना - मम जन्मदिवसे तु तथा न भवति कदापि ।

पल्लवी - सर्वे न । जनाः स्वकीयां संस्कृतिम् अनुसृत्य जनाः पृथग्रूपेण जन्मदिवसं मानयन्ति । केचन पूजनं कुर्वन्ति । केचन दानं कुर्वन्ति । केचन च परोपकारद्वारा जन्मदिवसं मानयन्ति ।

प्रसन्नः - आम् ! अहम् अपि जन्मदिवसे दानं करोमि ।

चेतना - किं ददासि ? कस्मै ददासि ?

प्रसन्नः - मम गृहस्य समीपे एकः बालाश्रमः अस्ति । तत्र अस्मादृशाः एव बालाः वसन्ति । किन्तु ते अनाथाः सन्ति । तेषां पितरौ न स्तः । अहं जन्मदिवसे सर्वदा तत्र गत्वा तेभ्यः मिष्टान्नं प्रयच्छामि । लेखनाय लेखनीम् पुस्तिकां च प्रयच्छामि । तत् सर्व प्राप्य ते अतीव प्रसन्नाः भवन्ति । शुभभावनया माम् अभिनन्दन्ति । जन्मदिवस्य शुभकामनागीतं च गायन्ति । तत् श्रुत्वा मम मनसि शान्तिः भवति ।

चेतना - अहो ! अतीव शोभनम् । मम गृहस्य समीपे तु कश्चन बालाश्रमः नास्ति ।

उत्कर्षः - सर्वैः बालाश्रमे न गन्तव्यम् । परोपकारस्य अन्ये अपि उपायाः भवन्ति ।

चेतना - आम्, मम गृहस्य समीपे एकः वृद्धाश्रमः अस्ति । तत्र बहवः असहायाः वृद्धाः वसन्ति । समीपे एकं मन्दिरं च अस्ति । आगामिनि मासे मम अपि जन्मदिनं वर्तते । तस्मिन् दिवसे अहं मन्दिरं गत्वा देवदर्शनं करिष्यामि । समीपस्य वृद्धाश्रमे गत्वा दानं च करिष्यामि । सति सम्भवे वस्त्रादिकं प्रयच्छामि । नो चेत् मिष्टान्नभोजनं कारयिष्यामि । माता पिता च अवश्यं मम सहयोगं करिष्यतः ।

बाल आश्रम लेखिएको एउटा घर । बालबालिका हातमा कापी र कलम लिएर रमाइरहेको र ताली बजाएर शुभकामना गीत गाइरहेको देखिने

वृद्धाश्रम लेखिएको बोर्ड देखिने एउटा घर । एउटी बालिकाले वृद्धाहरूलाई सहयोग गरिरहेको र उसलाई बाबु-आमाले सघाइरहेको देखिने चित्र ।

पल्लवी - अहो, शोभनः विचारः ! आगामिषु वर्षेषु अहम् अपि तथा एव करिष्यामि । सर्वेषां जन्मदिवसस्य योजना अस्माभिः श्रुता । उत्कर्षस्य योजनाम् अपि श्रोतुम् इच्छामि अहम् ।

उत्कर्षः - मम जन्मदिनं तु षण्मासेभ्यः पश्चात् वर्तते । अतः अधुना योजना नास्ति ।

प्रसन्नः - नहि नहि ! अधुना एव विचारयतु जन्मदिवसे किञ्चिद् नवीनं कर्तव्यम् ।

उत्कर्षः - अहं तु प्रतिवर्षं जन्मदिवसे सत्सङ्कल्पं करोमि । असमीचीनानां स्वभावानां त्यागस्य सङ्कल्पं करोमि । आगामिनि वर्षे शोभनतया पठिष्यामि इति प्रतिज्ञां करोमि । सत्यभाषणस्य, सहयोगस्य च यत्नं करिष्यामि ।

पल्लवी - आम्, अद्य अहम् अपि तथा एव विचारं विदधती अस्मि ।

चेतना - अहो ! अद्य तु पल्लव्याः जन्मदिवसः । वार्तालापस्य क्रमे अस्माभिः तद् एव विस्मृतम् । सर्वे मिलित्वा पल्लव्यै शुभकामनां यच्छामः । आगच्छन्तु, शुभकामनागीतं गायामः-

शुभमस्तु जन्मदिनं सर्वमङ्गलम्

शान्तिरस्तु पुष्टिरस्तु दीर्घजीवनम्

(सर्वे करतालं वादयन्तः गीतं गायन्ति ।)

पल्लवी - सर्वेभ्यः धन्यवादाः !

चेतना - त्वं ह्यः किमर्थं न उक्तवती ? तव उपहारः ?

पल्लवी - मित्राणां शुभाशयाः एव सर्वोत्कृष्टाः उपहाराः वर्तन्ते । अस्माकं मित्रता एव उपहारः वर्तते । एतदधिकः कः उपहारः आवश्यकः ? अहम् अतीव प्रसन्नास्मि । सर्वेभ्यः धन्यवादाः । अधुना कक्षासमयः । अस्तु गच्छामः ।

सर्वे - आम् गच्छामः । (सर्वे कक्षायां गच्छन्ति) ।

## शब्दार्थः

| मूलशब्दः | संस्कृते पर्यायः | नेपाल्याम् अर्थः | आङ्लभाषायाम् अर्थः |
|---|---|---|---|
| मध्यान्तरः | मध्यसमयः | मध्याह्नको छुट्टी | Break time |

| | | | |
|---|---|---|---|
| विलम्बेन | अशीघ्रम् | ढिलो | Lately |
| मिष्टान्नम् | मधुरं खाद्यम् | मिठाइ | Sweet |
| पककला | पाचननैपुण्यम् | पकाउने कला | Art of cooking |
| स्वास्थ्यवर्धक | आरोग्यकारकम् | स्वास्थकारक | Healthy |
| माहात्म्यम् | महत्त्वम् | महत्त्व | Importance |
| देवालयः | देवमन्दिरम् | देवताको मन्दिर | Temple |
| जन्मदिवसः | जन्मदिनम् | जन्मदिन | Birthday |
| क्दापि | कदाचन | कहिल्यै पनि | Whenever |
| समृद्धिः | सम्पत्तिः | समृद्धि | Prosperity |
| प्राप्नुमः | अधिगच्छामः | पाउँछौं | We get |
| अस्मादृशाः | अस्मत्-सदृशाः | हामीजस्तै | Like us |
| अनाथाः | निराश्रयाः | अनाथहरू | Orphans |
| प्रयच्छामि | ददामि | दिन्छु | I give |
| शुभभावना | शुभाशयः | शुभकामना | Well wish |
| अभिनन्दन्ति | तोषयन्ति | सम्मान गर्छन् | ... |
| वृद्धाश्रमः | वृद्धालयः | वृद्धाश्रम | Old age house |
| असहायाः | सहायहीनाः | असहाय | Helpless |
| किञ्चिद् | किञ्चन | केही | Something |
| त्यक्ष्यामि | त्यागं करिष्यामि | छोड्नेछु | Will leave |
| शुभाशयाः | शुभभावाः | शुभकामनाहरू | Well wishes |
| उपहाराः | उपायनानि | उपहारहरू | Gifts |

(सोलुखुम्बु जिल्लामा सगरमाथा माध्यमिक विद्यालय छ । पल्लवी शेर्पा, चेतना लामा, उत्कर्ष बानियाँ, प्रसन्न ढुङ्गेल त्यस विद्यालयमा पढ्छन् । उनीहरू सात कक्षाका विद्यार्थी हुन् । मध्यान्तरको छुट्टीमा उनीहरू एक अर्कासित कुराकानी गरिरहेका छन् ।)

चेतना - पल्लवी ! तिमी आज किन विद्यालय ढिलो आएकी ?

पल्लवी - एउटा गोप्य कुरा छ । तिमीहरू पहिला यो मिठाई खाओ । (सबैलाई लड्डु दिन्छे)

चेतना - अहो ! कति स्वादिष्ट लड्डु ! मैले त यस्तो मिठाइ कहिल्यै पनि खाएको थिइनँ । कहाँ पाइन्छ ?

पल्लवी - बजारमा यस्तो मिठाइ पाइँदैन चेतना ! यो त मेरी आमाको पाककलाको उपज हो । त्यसैले यो स्वास्थ्यवर्धक पनि छ र पोषिलो पनि छ । मेरी आमा जहिल्यै घरमै मिठाइ बनाउनुहुन्छ ।

चेतना - ल भयो मिठाइको कुरा ! बरु भन आज के विशेष हो र ?

पल्लवी - आज मेरो जन्मदिन हो । त्यसकारण विद्यालय आउन ढिला भएको हो ।

चेतना - अहो ! यस्तो पो हो ? जन्मदिनको धेरै धेरै शुभकामना । (सबै उसँगै शुभकामना दिन्छन् ।) उसो भए हिजै किन नभनेको त ?

पल्लवी - मैले पनि बिर्सिएको थिएँ, बेलुका पो आमाले भन्नुभयो, 'भोलि तिम्रो जन्मतिथि हो नि !'

प्रसन्नः - जन्मदिन त गतेअनुसार हुन्छ होइन र ? तिथिमा हुन्छ र ?

पल्लवी - होइन, हाम्रो घरमा चाहिँ जन्मोत्सव तिथिअनुसार मान्ने परम्परा छ । सबैले त्यसै गर्नुहुन्छ ।

उत्कर्षः - ल भैगो उसो भए, जन्मदिन त मेरो पनि थियो गएको महिना । म त समयमै विद्यालय आएको थिएँ ।

पल्लवी - अहो हो र ? जन्मदिन भनेर घरमा पूजा पनि थियो । अनि मन्दिर पनि गएकी थिएँ, त्यसैले आउन ढिलो भयो ।

चेतना - जन्मदिनमा कसको पूजा हुन्छ र ? मेरो जन्मदिनमा त कसैको पूजा भएजस्तो लाग्दैन त ?

पल्लवी - जन्मदिनमा अष्टचिरञ्जीवीको पूजा हुन्छ । म त प्रत्येक वर्ष जन्मदिनमा अष्टचिरञ्जीवीको पूजा गर्छु । मन्दिर गएर भगवान्‌को दर्शन पनि गर्छु ।

प्रसन्नः - जन्मदिनमा गएर दर्शन पनि गर्नुपर्छ र ? म त कहिल्यै गर्दिनँ त ।

पल्लवी - जन्मदिन विशेष अवसर हो । विशेष अवसरमा देवताहरूको दर्शन गर्नु त हाम्रो संस्कृति हो नि ।

चेतना - जन्मदिनमा देवताहरूको दर्शन गरेर के हुन्छ र ?

पल्लवी - देवताहरूले हाम्रो रक्षा गर्छन् भनेर आमा भन्नुहुन्छ । देवताको दर्शन गर्नाले लामो आयु र राम्रो स्वास्थ्य प्राप्त हुन्छ । जीवनमा सुख, समृद्धि र ऐश्वर्य मिल्छ । काम सफल हुन्छ । मनमा शान्ति र उत्साह बढ्छ ।

उत्कर्षः - अँ त, मेरो बुबा पनि त्यसै भन्नुहुन्छ । तर चिरञ्जीवीको पूजा चाहिँ कस्तो हुन्छ नि ?

पल्लवी - चिरञ्जीवीहरू जम्मा आठवटा हुन्छन् । उनीहरू निकै लामो समय बाँच्छन् । उनीहरूको त कहिल्यै मृत्यु हुँदैन भनिन्छ । उनीहरूको पूजा गर्नाले हाम्रो आयु पनि लामो हुन्छ । हामी पनि धेरै बाँच्छौँ । रोग पनि लाग्दैन । त्यसैले प्रत्येक वर्ष जन्मदिनमा चिरञ्जीवीहरूको पूजा हुन्छ हाम्रो घरमा ।

चेतना - मेरो जन्मदिनमा त त्यस्तो कहिल्यै हुँदैन ।

पल्लवी - सबैले गर्दैनन् नि ! आफ्नो घरको संस्कार र परम्पराअनुसार मानिसहरू फरक तरिकाले जन्मदिन मनाउँछन् । केही पूजा गर्छन् । कसैले दान गर्छन् र कसैले चाहिँ परोपकार गर्छन् ।

प्रसन्नः - अँ त, म पनि जन्मदिनमा दान गर्छु ।

चेतना - के दिन्छौ ? कसलाई दिन्छौ ?

प्रसन्नः - मेरो घरको नजिकै बालाश्रम छ । त्यहाँ हामीजस्तै बालबालिका बस्छन् । तर उनीहरू अनाथ छन् । उनीहरूका आमाबुबा छैनन् । म जन्मदिनमा सधैँ त्यहाँ जान्छु । उनीहरूलाई मिठाइ दिन्छु । लेख्नका लागि कापी र कलम पनि दिन्छु । त्यो पाएर उनीहरू अत्यन्त खुसी हुन्छन् । शुभकामना दिन्छन् । जन्मदिनको शुभकामना गीत पनि गाउँछन् । त्यो सुनेर मलाई कस्तो आनन्द आउँछ ।

चेतना - अहो ! कति राम्रो कुरा ! मेरो घरको त नजिकै बाल आश्रम पनि छैन ।

उत्कर्षः - सबैले बाल आश्रममा नै जानुपर्छ भन्ने छैन नि ! अरू पनि परोपकारका उपाय भइहाल्छन् नि ।

चेतना - अहो मैले पनि सम्झिएँ ! मेरो पनि घरभन्दा अलि पर एउटा वृद्धाश्रम छ । त्यहाँ असहाय वृद्धवृद्धा बस्नुहुन्छ । नजिकै एउटा मन्दिर पनि छ । आउने महिनामा मेरो पनि जन्मदिन पर्छ । त्यस दिन म पहिले मन्दिर जान्छु र दर्शन गर्छु । अनि नजिकैको वृद्धाश्रममा गएर दान-सहयोग गर्छु । सम्भव भयो भने केही कपडा दिनुपर्ला । भएन भने पनि मिठाइ खुवाउनुपर्ला । आमाबुबाले पक्कै मलाई सहयोग गर्नुहुनेछ ।

पल्लवी - अहो कति राम्रो विचार ! आउने वर्षहरूमा म पनि यसै गर्नुपर्ला । सबैको त योजना सुनियो अब उत्कर्षको सुन्न बाँकी छ ।

उत्कर्षः - मेरो त जन्मदिन पनि छ महिनापछि पर्छ । अहिल्यै कुनै योजना छैन ।

प्रसन्नः - त्यस्तो होइन, अहिले नै विचार गर न । जन्मदिनमा केही नयाँ गर्नुपर्छ ।

उत्कर्षः - म त प्रत्येक वर्ष जन्मदिनमा सत्सङ्कल्प गर्छु नि ! नराम्रा बानीहरू छोड्ने प्रण गर्छु । आउने वर्षमा राम्ररी पढ्ने प्रतिज्ञा गर्छु । साँचो बोल्ने, अरूलाई सहयोग गर्ने जस्ता राम्रा बानीको विकास गर्ने प्रयत्न गर्छु ।

पल्लवी - अहो ! हो त, आज मैले पनि त्यस्तै सोचिरहेकी थिएँ ।

चेतना - ओहो ! आज त चेतनाको जन्मदिन पो हो ! कुरैकुरामा हामीले बिर्सेछौँ । सबै मिलेर पल्लवीलाई फेरि शुभकामना दिऔँ । सबै मिलेर शुभकामनागीत गाऔँ -

जन्मदिन शुभ होस्, सबै मङ्गल होस्

शान्ति होस्, पुष्टि होस्, दीर्घजीवन होस् ।

(सबै ताली बजाउँदै गीत गाउँछन्) ।

पल्लवी - सबैलाई धन्यवाद ।

चेतना - हिजै किन नभनेकी ? खै त तिम्रो उपहार ?

पल्लवी - साथीहरूको सद्भाव नै सबैभन्दा ठुलो उपहार हो नि ! हाम्रो मित्रता नै उपहार हो । योभन्दा अरू के उपहार चाहियो र ? म अति धेरै खुसी छु । सबैलाई धन्यवाद ! बरु कक्षा पो सुरु हुने बेला भयो । जाऔँ ।

सवै - अँ जाऔँ । (सबै कक्षामा जान्छन्) ।

## श्रवणं भाषणं च

१. पाठस्य संवादं शिक्षकस्य मुखात् शृणुत ।

२. अस्मिन् पाठे कति पात्राणि सन्ति ? तेषां नामानि वदत ।

३. अधस्तनशब्दान् प्रथमम् एकः उच्चारयतु, सर्वे तम् अनुकुर्वन्तु । कठिनशब्दानाम् उच्चारणाय शिक्षकस्य साहाय्यं गृह्णन्तु-

सोलुखुम्बुमण्डलम्, मध्यान्तरस्य समयः, स्वास्थ्यवर्धकम्, पुष्टिकारकम्, देवदर्शनाय, अष्टचिरजीविनाम्, सुस्वास्थ्यम्, पृथग्रूपेण, परोपकारद्वारा अभिनन्दन्ति, मिष्टान्नभोजनम्, सत्सङ्कल्पः

४. प्रसन्नस्य सर्वाः अभिव्यक्तीः शिक्षकात् शृणुत । तदनु अधस्तनशब्दानाम् अर्थं मातृभाषायां वदत-

किमर्थम्, अहम् अपि, बालाश्रमः, अस्मादृशाः, अनाथाः, लेखनाय, प्रयच्छामि, अभिनन्दन्ति, शुभकामनागीतम्

५. पाठस्य संवादं मनसा पठत । पठित्वा अबुद्धार्थानां शब्दानाम् अर्थं शिक्षकं पृच्छत ।

६. जन्मदिवसे किं किं न कर्तव्यम् ? वदत ।

७. पल्लवी स्वस्य जन्मदिवसे किं किं कृतवती ? वर्णयत ।

८. स्वस्य जन्मोत्सवे तव गृहे किं किं भवति ? वर्णयत ।

९. सत्यवाक्ये आम् इति, असत्यवाक्ये नहि नहि इति वदत-

(क) पल्लव्या प्रदत्तं मिष्टान्नं तिक्तम् अस्ति ।

(ख) जन्मदिवसे अष्टचिरजीविनां पूजनं भवति ।

(ग) बालाश्रमे अनाथाः बालाः वसन्ति ।

(घ) वृद्धाश्रमे स्थिताः वृद्धाः असहायाः न भवन्ति ।

(ङ) मित्राणां शुभाशयाः एव उपहाराः भवन्ति ।

१०. पञ्चानां षण्णां वा मित्राणां समूहं निर्मापयत । जन्मदिवसस्य अवसरे जनाः किं कुर्वन्ति विमर्शं कुरुत । निष्कर्षं च एकैकशः कक्षायां श्रावयत ।

११. अस्य पाठस्य भावार्थं स्वमातृभाषायां वर्णयत ।

१२. अधस्तनं गद्यं पठित्वा निर्दिष्टानि भाषिककार्याणि कुरुत-

परिवारे प्रतिवर्षं विविधाः उत्सवाः भवन्ति । विविधानि पर्वाणि च आगच्छन्ति । परिवारस्य सर्वेषां जन्मोत्सवस्य अवसरे गृहे उत्सवः भवति । पर्वसु च उत्सवः भवति । तस्मिन् अवसरे जनाः बान्धवान् आहूय भोजयन्ति । किन्तु बान्धवानां भोजनाय आपणात् परिकारान् आनयन्ति । आपणस्य परिकाराः महर्घाः भवन्ति । तेषां क्रयणाय अधिकस्य धनस्य व्ययः भवति । आपणस्य परिकाराः स्वास्थ्यवर्धकाः अपि न भवन्ति । तत्र क्षणिकम् आस्वादं वर्धयितुं अनेकाः सामग्र्यः प्रयुक्ताः भवन्ति । तेषां सेवनेन अस्माकं स्वास्थ्यं विकृतं भवति । शरीरे रोगः वर्धते । अतः गृहे एव भोजनस्य परिकाराणां निर्माणं करणीयम् । गृहे एव उपलब्धाभिः सामग्रीभिः मिष्टान्नादीनां निर्माणं कर्तव्यम् । पर्वसु उत्सवेषु च अधिकस्य धनस्य व्ययः न कर्तव्यः । यथाशक्ति एव अस्माभिः धनस्य व्ययः करणीयः । अधिकस्य धनस्य व्ययेन एव समाजे प्रतिष्ठा भवति इति भावना नैव उचिता । उत्सवेषु पर्वसु च केवलं मनोरञ्जनम् एव न अनुष्ठानानि च करणीयानि । यथा जन्मोत्सवादिषु उत्सवेषु स्वस्य परम्परानुसारं देवदर्शनम्, पूजनं वा करणीयम् । विविधेषु पर्वसु च पर्वानुसारं अनुष्ठानं कर्तव्यम् । तथा करणेन अस्माकं संस्कृतिः संरक्षिता भविष्यति ।

(क) अनुच्छेदं पठित्वा अधस्तनशब्दानाम् मातृभाषायाम् अर्थं वदत

विविधानि, बान्धवान्, आहूय, स्वास्थ्यवर्धकाः, यथाशक्ति

(ख) अधस्तनप्रश्नानाम् उत्तराणि वदत

(अ) उत्सवे जनाः कान् आह्वयन्ति ?

(आ) बान्धवानां भोजनाय जनाः किं कुर्वन्ति ?

(इ) किमर्थम् अधिकस्य धनस्य व्ययः भवति ?

(ई) आपणस्य परिकाराणां सेवनेन किं भवति ?

उ) अस्माकं संस्कृतेः रक्षणाय किं कर्तव्यम् ?

परिवारमा प्रत्येक वर्ष अनेक उत्सवहरू हुन्छन् । अनेक पर्वहरू पनि आइरहन्छन् । परिवारका सबैको जन्मोत्सवमा घरमा उत्वव हुन्छ । पर्वमा पनि उत्सव हुन्छ । त्यस अवसरमा मानिसहरू इष्टमित्रलाई बोलाएर खुवाउँछन् । तर उनीहरूलाई खुवाउन बजारबाट परिकारहरू ल्याउँछन् । बजारका खानेकुरा महङ्गा हुन्छन् । त्यो किन्नका लागि धेरै पैसा चाहिन्छ । बजारका खानेकुरा स्वास्थ्यवर्धक पनि हुँदैनन् । त्यस्ता खानेकुरामा एकैछिनको स्वादका लागि अनेक सामग्रीको प्रयोग गरिन्छ । त्यस्तो खानाले हाम्रो स्वास्थ्य बिग्रिन्छ । शरीरमा रोग बढ्छ । त्यसकारण घरमा नै भोजनका परिकार बनाउनुपर्छ । घरमा नै उपलब्ध हुने सामग्रीहरूबाट मिठाइ बनाउनुपर्छ । पर्वमा र उत्सवमा धेरै धन खर्च गर्नु हुँदैन । आफूले सक्नेजति मात्र खर्च गर्नुपर्छ । धेरै खर्च गरेर समाजमा इज्जत बढ्छ भन्ने भावना ठिक होइन । उत्सवमा र पर्वमा केवल मनोरञ्जन मात्र गरेर पनि हुँदैन । आराधना एवं अनुष्ठान पनि गर्नुपर्छ । जन्मदिन आदि उत्सवमा परम्पराअनुसार देवताहरूको दर्शन गर्ने, पूजा गर्ने, दान गर्ने आदि गर्नुपर्छ । पर्वमा पनि पर्वअनुसारको उपासना गर्नुपर्छ । त्यसो गर्नाले नै हाम्रो संस्कृतिको रक्षा हुन्छ ।

१२. श्रवणपाठं श्रुत्वा अधस्तनान् प्रश्नान् उत्तरयत-

(क) बुद्धपूर्णिमा कस्य जन्मदिवसः वर्तते ?

(ख) कः अस्माकं देशस्य गौरवं वर्तते ?

(ग) कः शान्तिदूतः ?

(घ) बुद्धपूर्णिमायाः अवसरे चैत्येषु किं भवति ?

(ङ) बुद्धस्य पितुः मातुश्च नाम किम् किम् आसीत् ?

(च) बुद्धस्य जन्मभूमिः अधुना कुत्र अवस्थिता वर्तते ?

(छ) बुद्धभिक्षवः अत्रागत्य किं कुर्वन्ति ?

(ज) वयं किमर्थं गौरवान्विताः स्मः ?

## पठनम्

१. पाठस्य संवादं पात्रानुसारं परस्परं विभज्य साभिनयं पठत ।

२. अधस्तनं गद्यं एकैकशः द्रुतं पठत । पठनक्रमे अन्ये समयं विचारयत ।

मम गृहस्य समीपे एकः बालाश्रमः अस्ति । तत्र अस्मादृशाः एव बालाः वसन्ति ।

किन्तु ते अनाथाः सन्ति । तेषां पितरौ न स्तः । अहं जन्मदिवसे सर्वदा तत्र गत्वा तेभ्यः मिष्टान्नं प्रयच्छामि । लेखनाय लेखनीम् पुस्तिकां च प्रयच्छामि । तत् सर्वं प्राप्य ते अतीव प्रसन्नाः भवन्ति । शुभभावनया माम् अभिनन्दन्ति । जन्मदिवस्य शुभकामनागीतं च गायन्ति । तत् श्रुत्वा मम मनसि शान्तिः भवति ।

३. पाठं मनसा पठित्वा केन उक्तम् ? वदत

(क) एकम् रहस्यं वर्तते । प्रथमम् इदं मिष्टान्नं खादन्तु ।

(ख) अस्तु तावत् मिष्टान्नस्य माहात्म्यम् । वद अद्य को विशेषः ?

(ग) जन्मदिवसे देवदर्शनं किमर्थम् ? अहं तु न करोमि कदापि ।

(घ) आम्, मम पिता अपि तथा एव वदति ।

(ङ) जनाः स्वकीयां संस्कृतिम् अनुसृत्य जनाः पृथग्रूपेण जन्मदिवसं मानयन्ति ।

(च) सर्वैः बालाश्रमे न गन्तव्यम् । परोपकारस्य अन्ये अपि उपायाः भवन्ति ।

४. एकक्षणपरिमितं कालं पाठस्य संवादांशं निरवच्छिन्नं पठत । पठने कुत्र त्रुटिर्जाता इति शिक्षकस्य साहाय्येन अवगच्छत । तस्य च सम्यगुच्चारणं शिक्षकस्य मुखात् श्रुत्वा अनुकुरुत ।

५. लेख्यचिह्नानि विचार्य प्रसन्नस्य अभिव्यक्तीः पठत ।

६. पाठस्य मौनपठनं विधाय अस्य सारांशं प्रकाशयत ।

७. पाठानुसारं सत्यासत्यं विवेचयत

(क) अद्य पल्लव्याः जन्मदिवसः अस्ति ।

(ख) पल्लवी मिष्टान्नं आपणाद् आनीतवती आसीत् ।

(ग) चेतनायाः गृहे जन्मोत्सवे पूजा भवति ।

(घ) प्रसन्नः स्वस्य जन्मोत्सवं गृहे मानयति ।

(ङ) जन्मदिवसे सत्सङ्कल्पः नैव करणीयः इति उत्कर्ष वदति ।

८. पाठस्य सर्वेषां पात्राणां अभिव्यक्तिं विचार्य पठत । कस्य विचारः सर्वथा उचितः ? इति कक्षायां विमर्शं कुरुत ।

९. पाठं पठित्वा अधस्तनान् प्रश्नान् एकवाक्येन उत्तरयत

(क) पल्लवी किमर्थं विलम्बेन विद्यालयम् आगतवती ?

(ख) पल्लव्या प्रदत्तं मिष्टान्नं कीदृशं वर्तते ?

(ग) जन्मोत्सवे केषां पूजनं भवति ?

(घ) प्रसन्नः जन्मदिवसे बालान् किं किं प्रयच्छति ?

(ङ) उत्सवस्य जन्मदिवसः कदा वर्तते ?

(च) चेतना स्वस्य जन्मदिवसे कुत्र गमिष्यति ?

१०. अधस्तनं चित्रं स्वशब्दैः वर्णयत

एउटी महिला भान्साकोठामा बसेर विभिन्न परिकार बनाइरहेको चित्र । नजिकै एक जना सानी बालिका प्रसन्न मुद्रमा बसिरहेको चित्र । नजिकै पकाइएका विभिन्न मिठाइ एवं परिकारहरू राखिएको र एक आपसमा कुराकानी भइरहेको जस्तो देखिने चित्र ।

११. अधस्तनं गद्यं पठित्वा निर्दिष्टानि भाषिककार्याणि कुरुत

चिरजीविनः अष्टौ सन्ति । मार्कण्डेयः, बलिः, व्यासः, हनुमान्, विभीषणः, कृपः, परशुरामः, अश्वत्थामा चेति चिरजीविनः उच्यन्ते । सामान्यतया मानवानां आयुः शतं वर्षाणि यावद् भवति । किन्तु चिरजीविनां आयुः कति भवति ? इति ज्ञातं नास्ति । सहस्रेभ्यः वर्षेभ्यः एते पृथिव्यां भ्रमन्तः सन्ति इति विश्वस्यते । जन्मदिवसे एतेषां विधिपूर्वकं पूजा भवति । पूजनक्रमे एतेषां प्रतिमाः स्थाप्यन्ते । प्रतिमासु मार्कण्डेयादीनां चिरजीविनां क्रमशः पूजनं भवति । एतेषां पूजनेन जनाः दीर्घम् आयुः लभन्ते इति विश्वस्यते । अतः जन्मदिवसे जनाः सश्रद्धं चिरजीविनः पूजयन्ति । अधुना मन्दिरेषु अपि अष्टचिरजीविनां प्रतिमानां स्थापनस्य परम्परा अस्ति । जन्मदिवसे एव न कार्तिकशुक्लद्वितीयायां भ्रातृपूजनस्य अवसरे एतेषां पूजनं भवति । स्वस्य भ्रातुः दीर्घम् आयुः कामयमानाः भगिन्यः चिरजीविनां पूजनं कुर्वन्ति । तेषां पूजनेन स्वस्य भ्रातुः दीर्घमायुः भवति इति विश्वस्यते ।

(क) अधस्तनानि प्रश्नानि उत्तरयत

(अ) के चिरजीविनः उच्यन्ते ?

(आ) मानवानां आयुः सामान्यतः कति भवति ?

(इ) एतेषां पूजनं कथं विधीयते ?

(ई) चिरजीविनां पूजनेन किं भवतीति विश्वस्यते ?

(उ) कस्मिन् कस्मिन् अवसरे चिरजीविनां पूजा भवति ?

(ऊ) भगिन्यः किं कामयमानाः चिरजीविनः पूजयन्ति ?

(ख) अधस्तनपदानां प्रयोगद्वारा निर्मितानि वाक्यानि पुस्तिकायां लिखत

किन्तु, यावद्, विश्वस्यते, विधिपूर्वकम्, परम्परा, दीर्घमायुः

१२. पाठस्य प्रथमे प्रदत्तं शुभकामनागीतं सर्वे मिलित्वा गायत ।

## लेखनम्

१. अधस्तनानि पदानि शुद्धानि कृत्वा पुस्तिकायां लिखत

मिष्ठान्नम्, पूस्टिकारकम्, देबदर्शनाय, समृद्धिः, चिरजिवीनः, वालाश्रमः, बृद्धाश्रमः

२. अधस्तनानि पदानि प्रयुज्य जन्मदिवसस्य विषये एकम् अनुच्छेदं रचयत

जन्मदिवसः, मिष्टान्नम्, मित्राणि, देवदर्शनम्, बालाश्रमः, वृद्धाश्रमः, दानम्, परोपकारः ।

३. समुचितं पदं विन्यस्य रिक्तस्थानं पूरयत

(क) गृहे निर्मितं मिष्टान्नं ............ भवति । (पुष्टिकारकम्, रोगकारकम्, स्वास्थ्यनाशकम्)

(ख) जनाः ............ गत्वा देवदर्शनं कुर्वन्ति । (विद्यालयम्, वृद्धाश्रमम्, देवालयम्)

(ग) जन्मदिवसे ............ पूजनं भवति । (अष्टवसूनाम्, अष्टाचिरजीविनाम्, सप्तर्षीणाम्)

(घ) पुस्तिकां लेखनी च प्राप्य बालाः ........... भवन्ति । (प्रसन्नाः, चकिताः, दुःखिताः)

(च) मित्राणां ........... एव सर्वोत्कृष्टाः उपहाराः वर्तन्ते । (दुराशयाः, शुभाशयाः)

४. परस्परं मेलयत

| समूहः क | समूहः ख |
|---|---|
| जन्मदिवसः | असहायाः वृद्धाः |
| देवालयः | चिरजीविनां पूजनम् |

| | |
|---|---|
| वृद्धाश्रमः | अनाथाः बालाः |
| बालाश्रमः | देवदर्शनम् |

५. अधस्तनम् अनुच्छेदं शिक्षकात् श्रुत्वा पुस्तिकायां लिखत, पश्चात् पुस्तकं दृष्ट्वा त्रुटीर्निराकुरुत

अद्य मम जन्मदिवसः वर्तते । अतः अहम् अतीव प्रसन्नः अस्मि । जन्मदिवसस्य अवसरे मम गृहे भोजनाय बान्धवाः निमन्त्रिताः सन्ति । माता प्रातः उत्थाय मिष्टान्नानि पचन्ती अस्ति । सा मोदकम्, पूरिकाम्, उपसेचनकम्, व्यञ्जनानि, पायसम्, ओदनं च पचन्ती अस्ति । मम मात्रा स्वादु भोजनं पचति । अद्य मम सखायः अपि गृहे आगमिष्यन्ति । ते शुभकामनां प्रस्तुवन्ति । अहं तैः सह खेलामि, नृत्यामि च । अग्रजाः, अनुजाः बान्धवाश्च महयं उपहारान् प्रयच्छन्ति । अद्यतनः दिवसः मम कृते विशेषः वर्तते ।

६. एकस्मिन् अनुच्छेदे पाठस्य सारांशं लिखत ।

७. 'मित्राणां शुभाशयाः एव सर्वोत्कृष्टाः उपहाराः वर्तन्ते' एतस्य वाक्यस्य व्याख्यानं कुरुत ।

८. पर्यायवाचिनः शब्दान् अन्विष्य एकत्र लिखत

पाककला, देवालयः, चिरकालम्, प्रसन्नाः, सहयोगः, विदधती, उपहारः, उपायनम्, पाचननैपुण्यम्, देवमन्दिरम्, हृष्टाः, बहुकालम्, साहाय्यम्, कुर्वती ।

९. अधस्तनप्रश्नानाम् उत्तराणि लिखत

(क) अद्य कस्य जन्मदिवसः वर्तते ?

(ख) पल्लवी विद्यालये किमर्थं विलम्बेन आगतवती ?

(ग) जन्मदिवसस्य अवसरे पल्लवी किं किं कृतवती ?

(घ) जनाः जन्मदिवसं कथं मानयन्ति ?

(ङ) देवानां दर्शनेन किं भवतीति विश्वासः वर्तते ?

(च) प्रसन्नः स्वस्य जन्मदिवसे किं करोति ?

(छ) बालाश्रमे कीदृशाः बालाः वसन्ति ? ते च प्रसन्नस्य जन्मदिवसे किं कुर्वन्ति ?

(ज) असहायाः वृद्धाः कुत्र वसन्ति ?

(झ) चेतना वृद्धाश्रमे गत्वा किं किं करोति ?

(ञ) उत्कर्षः स्वस्य जन्मदिवसे कानि कार्याणि कुरुते ?

(ट) सर्वोत्कृष्टाः उपहाराः के ?

१०. त्वं स्वस्य जन्मदिवसे किं किं करोषि ? दशभिः वाक्यैः वर्णयत ।

११. अधस्तनम् अनुच्छेदं पठित्वा निर्दिष्टानि भाषिककार्याणि कुरुत

वयं केवलं स्वस्य जन्मदिवसं उत्सवरूपेण न मानयामः । महतां पुरुषाणाम् अपि जन्मदिवसम् उत्सवरूपेण मानयामः । वयं रामस्य जन्मदिवसं 'रामनवमी' इति उत्सवरूपेण मानयामः । कृष्णास्य जन्मोत्सवम् च 'कृष्णाजन्माष्टमी' इति पर्वरूपेण मानयामः । बुद्धस्य जन्मदिवसं 'बुद्धपूर्णिमा' इति पर्वरूपेण मानयामः । तथैव परोपकारिणां महतां पुरुषाणां जन्मदिवसं अपि उत्सवरूपेण वयं मानयामः । समाजसेविनाम्, साहित्यिकानाम्, देशविकासाय जीवनम् अर्पितवताम् महापुरुषाणाम् च जन्मदिवसेषु उत्सवः भवति । तेषां जन्मदिवसः प्रायेण जन्मजयन्ती इति पदेन उच्यते । फाल्गुनन्दस्य जन्मदिवसः फाल्गुनन्दजयन्ती इति उच्यते । भानुभक्तस्य, मोतीरामस्य, लक्ष्मीप्रसादस्य च जयन्ती क्रमेण भानुजयन्ती, मोतीजयन्ती, लक्ष्मीजयन्ती इति उच्यन्ते । एतेषु अवसरेषु जनाः तेषां प्रतिमासु गत्वा माल्यार्पणं कुर्वन्ति । तत्र गत्वा शुभभावं च प्रकटयन्ति । अस्माकम् एषा परम्परा अतीव सुसमृद्धा, समीचीना च वर्तते ।

क) एकपदेन उत्तरयत

(अ) 'कृष्णाजन्माष्टमी' कस्य जन्मदिवसः ?

(आ) महापुरुषाणां जन्मदिवसे किं भवति ?

(इ) महापुरुषाणां जन्मदिवसे जनाः प्रतिमासु किं कुर्वन्ति ?

(ई) अस्माकं परम्परा कीदृशी वर्तते ?

(ख) अनुच्छेदं पठित्वा सारिणी पूरयत

| जन्मदिवसः | तस्य नामधेयम् |
|---|---|
| रामस्य जन्मदिवसः | रामनवमी |
| कृष्णास्य जन्मदिवसः | .............. |
| .............. | फाल्गुनन्दस्य जन्मदिवसः |
| भानुभक्तस्य जन्मदिवसः | .............. |

| .............. | मोतीजयन्ती |
|---|---|
| लक्ष्मीप्रसादस्य जन्मदिवसः | .............. |

ग) अधस्तनानि उत्तराणि पठित्वा अनुच्छेदानुसारं प्रश्नान् निर्मापयत

(अ) रामस्य जन्मदिवसः 'रामनवमी' इति नाम्ना उच्यते ।

(आ) 'कृष्णजन्माष्टमी' कृष्णस्य जन्मदिवसः वर्तते ।

(इ) फाल्गुनन्दस्य जन्मदिवसं जनाः 'फाल्गुनन्दजयन्ती' इति कथयन्ति ।

(ई) महापुरुषाणां जन्मदिवसः प्रायेण 'जन्मजयन्ती' इति पदेन उच्यते ।

(उ) जन्मजयन्तीषु जनाः प्रतिमायां माल्यार्पणं कुर्वन्ति ।

(ऊ) 'बुद्धपूर्णिमायां' जनाः बुद्धं स्मरन्ति ।

हामी केवल आफ्नो मात्र जन्मदिनमा उत्सव मनाउँदैनौँ । महान् पुरुषहरूको पनि जन्मदिवस मनाउँछौँ । रामको जन्मदिवस 'रामनवमी' उत्सवको रूपमा मनाउँछौँ । कृष्णको जन्मोत्सव 'कृष्णजन्माष्टमी' पर्वको रूपमा मनाउँछौँ । बुद्धको जन्मदिवस 'बुद्धपूर्णिमा' पर्वको रूपमा मनाउँछौँ । त्यसैगरी परोपकारी महापुरुषहरूको जन्मदिन पनि उत्सवको रूपमा मनाउँछौँ । समाजसेवी, साहित्यकार एवं देश विकासका लागि जीवन समर्पित गर्ने सहिदहरूको जन्मदिन पनि उत्सवको रूपमा मनाउने चलन छ । त्यस्ता व्यक्तिहरूको जन्मदिनलाई 'जन्मजयन्ती' भन्ने प्रचलन छ । फाल्गुनन्दको जन्मदिनलाई फाल्गुनन्दजयन्ती भनिन्छ । भानुभक्तको, मोतीरामको र लक्ष्मीप्रसादको जन्मदिनलाई क्रमशः भानुजयन्ती, मोतीजयन्ती र लक्ष्मीजयन्ती भनिन्छ । यस्ता अवसरमा मानिसहरू उनीहरूको प्रतिमा (सालिक) मा माल्यार्पण गर्छन् । उनीहरूलाई श्रद्धाञ्जलि अर्पण गर्छन् । हाम्रो यो परम्परा अत्यन्त समृद्ध र सुन्दर छ ।

१२. प्रदत्तवाक्यानां साहाय्येन निम्नाङ्कितं संवादं पूरयत-

(क) कदाचन पाचनप्रक्रियायां समस्या भवति । कदाचन वायुविकारः भवितुम् अर्हति । कदाचन दूषितस्य भोजनस्य जलस्य वा कारणेन अपि उदरे पीडा भवति । अतः विचार्य एव औषधं सेवनीयम् ।

(ख) अहो ! तर्हि चिकित्सकस्य पार्श्वे गन्तव्यं त्वया ।

(ग) अस्तु, गच्छतु । पुनर्मिलावः । शीघ्रं स्वास्थ्यलाभः स्यात् ।

(घ) अस्तु ! गच्छतु । चिकित्सकस्य परामर्शं विना औषधं न गृह्णातु ।

(ङ) मम गृहे औषधम् आसीत् । पूर्वं पितुः उदरे पीडा आसीत् । तस्य औषधम् अवशिष्टं आसीत् । अहं तद् एव सेवमानः अस्मि ।

(च) गुरो ! अद्य मम स्वास्थ्यं समीचीनं नास्ति ।

(छ) अद्य मम उदरे पीडा वर्तते ।

शिक्षकः - समीर ! किमर्थं दुःखितः असि ?

छात्रः - ..................................

शिक्षकः - अहो ! किम् अभूत् ?

छात्रः - .................................. । प्रातःकालादेव तथा पीडा वर्तते ।

शिक्षकः - .................................. ।

छात्रः - औषधं सेवमानः अस्मि ।

शिक्षकः - औषधं कः दत्तवान् ?

छात्रः - .................................. ।

शिक्षकः - अहो ! तथा नैव करणीयम् । उदरे पीडा तु सर्वेषां भवति । किन्तु कारणं भिन्नं भवति । .................................. ।

छात्रः - अहो ! तर्हि औषधं न सेवे अहम् । अधुना एव चिकित्सालयं गन्तुं वाञ्छामि ।

शिक्षकः - अस्तु ! गच्छतु । चिकित्सकस्य परामर्शं विना औषधं न गृह्णातु ।

छात्रः - धन्यवादः गुरो ! इतः परं तथा न करिष्यामि । अधुना गच्छामि ।

शिक्षकः - .................................. ।

छात्रः - धन्यवादः !

## व्याकरणानुशीलनम्

१. अधस्तनी सारिणी पठित्वा निर्दिष्टकार्याणि कुरुत

| धातुः | प्रत्ययः | सिद्धरूपम् (नपुं.) | अर्थः |
|---|---|---|---|
| भू | तव्यत्/तव्य | भवितव्यम् | हुनुपर्छ |

| | | | |
|---|---|---|---|
| खाद् | तव्यत्/तव्य | खादितव्यम् | खानुपर्छ |
| हा | तव्यत्/तव्य | हातव्यम् | छोड्नुपर्छ |
| श्रु | तव्यत्/तव्य | श्रोतव्यम् | सुन्नुपर्छ |
| गम् | तव्यत्/तव्य | गन्तव्यम् | जानुपर्छ |
| कृ | तव्यत्/तव्य | कर्तव्यम् | गर्नुपर्छ |

(क) परस्परं योजयत

| समूहः क | समूहः ख |
|---|---|
| जि | हन्तव्यम् |
| स्मृ | स्तोतव्यम् |
| चि | जेतव्यम् |
| स्तु | स्मर्तव्यम् |
| हन् | चेतव्यम् |

(ख) उदाहरणानि दृष्ट्वा रिक्तस्थानं पूरयत

समीचीनः व्यवहारः कर्तव्यः । देशस्य रक्षा कर्तव्या । गृहकार्यं कर्तव्यम् ।

वेदः पठितव्यः । कविता पठितव्या । स्तोत्रं पठितव्यम् ।

विद्यालयः गन्तव्यः । वाराणसी गन्तव्या । मन्दिरं गन्तव्यम् ।

क) गुरूणाम् उपदेशः ........... । (श्रोतव्यः, श्रोतव्या, श्रोतव्यम्)

ख) युद्धे शत्रवः ............ । (जेतव्याः, जेतव्यानि)

ग) अस्माभिः आलस्यम् .......... । (हातव्यम्, हातव्या, हातव्यः)

घ) बालकेभ्यः लेखनी ............. । (दातव्यः, दातव्या, दातव्यम्)

## २. सारिणी पठित्वा रिक्तस्थानानि पूरयत

| धातुः | प्रत्ययः | सिद्धरूपम् (नपुं.) | अर्थः |
|---|---|---|---|
| भू | अनीयर् | भवनीयम् | हुनुपर्छ |
| खाद् | अनीयर् | खादनीयम् | खानुपर्छ |
| हा | अनीयर् | हानीयम् | छोड्नुपर्छ |

| | | | |
|---|---|---|---|
| श्रु | अनीयर् | श्रवणीयम् | सुन्नुपर्छ |
| गम् | अनीयर् | गमनीयम् | जानुपर्छ |
| कृ | अनीयर् | करणीयम् | गर्नुपर्छ |

सदा समये विद्यालयः ............ (गमनीयः, गमनीयम्) । विद्यालये गत्वा गुरूणां आदरः ....... (करणीयः, करणीया) । कक्षायां पाठः .......... (पठनीयम्, पठनीयः) । पद्यं सम्यग् .......... (उच्चारणीयम्, उच्चारणीयः) । सुन्दराणि अक्षराणि ............. (लेखनीयानि, लेखनीयम्) । गृहम् आगत्य समये गृहकार्यम् ......... (समापनीयम्, समापनीयानि) । गृहकार्यं समाप्य पुस्तिका .......... (स्थापनीया, स्थापनीयम्) ।

३. सारिणी पूरयत

| शब्दः | पुंल्लिङ्गम् | स्त्रीलिङ्गम् | नपुंसकलिङ्गम् |
|---|---|---|---|
| पठितव्य | पठितव्यः | पठितव्या | पठितव्यम् |
| लेखनीय | लेखनीयः | लेखनीया | लेखनीयम् |
| स्मरणीय | ........... | ........... | ........... |
| सेवितव्य | ........... | ........... | ........... |
| वर्णनीय | ........... | ........... | ........... |
| पातव्य | ........... | ........... | ........... |

## रचनात्मकः अभ्यासः




चित्रं दृष्ट्वा एतादृशम् एव जन्मोत्सवस्य शुभकामनापत्रं निर्मापयत ।

२. सख्युः जन्मदिवसस्य अवसरे एकं गीतं रचयत ।

## श्रवणपाठः

'बुद्धपूर्णिमा' बुद्धस्य जन्मदिवसः वर्तते । वैशाखशुक्लपूर्णिमा 'बुद्धपूर्णिमा' नाम्ना प्रसिद्धा वर्तते । बुद्धः अस्माकं देशस्य गौरवं वर्तते । बुद्धस्य जन्मदिवसे अस्माकं देशे अवकाशः भवति । बुद्धः शान्तेर्दूतः वर्तते । तस्य जन्मदिवसः अस्माकं नेपालिनां कृते पर्व वर्तते । बुद्धपूर्णिमायाः अवसरे विविधेषु बौद्धचैत्येषु तस्य आराधनं भवति । नेपाले बहवः बौद्धाः निवसन्ति । तस्मिन् अवसरे बुद्धस्य उपदेशानां चर्चा भवति । बौद्धदर्शनस्य अपि विषये विमर्शः प्रचलति । बुद्धस्य पितुः नामः शुद्धोदनः आसीत् । तस्य मातुः नाम च मायादेवी आसीत् । तस्य जन्मभूमिः लुम्बिनीति प्रसिद्धा नगरी वर्तते । सा नगरी अधुना नेपालस्य रुपन्देहीमण्डले अवस्थिता अस्ति । बुद्धपूर्णिमायाः अवसरे तत्र बहवः जनाः दर्शनाय तत्र आगच्छन्ति । बुद्धपूर्णिमायाः सन्दर्भे विदेशेभ्यः श्रद्धालवः नेपाले आगच्छन्ति । बुद्धभिक्षवः अत्रागत्य साधनां कुर्वन्ति । इयं भूमिः बुद्धस्य जन्मभूमिः वर्तते । अतो वयं सर्वदा गौरवान्विताः स्मः ।

पञ्चमः पाठ

# पितृभक्तः चाणक्यः

एकदा चणकः स्वमित्रस्य शकटारस्य गृहम् अगच्छत् । चणकः चाणक्यस्य पिता आसीत् । शकटारश्च मगधदेशस्य अमात्यः आसीत् । चणकः मगधदेशस्य राज्ञा धनानन्देन सह असन्तुष्टः अभवत् । यतः धनानन्दः विलासी क्रूरशासकः आसीत् । चणकस्य विद्वत्तायाः उपयोगः विधीयते स्म चेद् राज्यस्य उन्नतिरेव भवति स्म । चणकः महामात्यपदम् अलङ्कृत्य विदेशिनाम् आक्रमणाद् राज्यं रक्षितुम् ऐच्छत् । तस्य विषये स्वमित्रेण सह वार्ता च अकरोत् । धनानन्दः विलासे एव मग्नः आसीत् । वार्तायां धनानन्दं पदच्युतं कारयितुं चणकः विमर्शम् अकरोत् ।

राज्ये गुप्तचराः भवन्ति एव । राज्यस्य विषये, प्रजानां विचारविषये, विदेशनीतिविषये च ज्ञातुं गुप्तचराणां नियोजनं राज्ये भवति । दुर्भाग्यवशाद् गुप्तचरमाध्यमेन धनानन्दः चणकस्य योजनाम् अजानात् । तेन सः अतीव क्रुद्धः जातः । स चणकं कारागारे अस्थापयत् । एतेन तस्य मनः सन्तुष्टं न जातम् । राजद्रोहस्य अभियोगे ब्राहमणाय मृत्युदण्डं प्रदास्यते इति समाचारः राज्यस्य कोणे कोणे प्रसारितः । राजधान्याः मध्यभागे चणकस्य शिरः स्थापयित्वा धनानन्दः सर्वाः प्रजाः राजद्रोहस्य परिणामम् असूचयत् । स्वपितुः चणकस्य तादृशीम् अवस्थां विलोक्य चाणक्यः अतीव दुःखितः आसीत् । पितुः दाहसंस्कारं कृत्वा धनानन्दस्य राज्यपतनाय चाणक्यः प्रतिज्ञाम् अकरोत् ।

(चित्र : राजा चन्द्रगुप्तको सभा बसेको छ । त्यसमा सिंहासनमा राजा बसेका छन् भने मन्त्रिगण वरिपरि बसेका छन् । चाणक्य राजाको नजिकको आफ्नो आसनबाट उठेर राजातिर हेर्दै केही भन्दै छन् ।)

ततः विष्णुगुप्तनाम्ना स तक्षशिलानामके अध्ययनसंस्थाने पठितुम् आरभत । पित्रोः आज्ञापालनेन सह पितृभ्यां प्रदर्शितस्य मार्गस्य अनुसरणं सन्ततेः धर्मः भवति । अस्माकं पूर्वजाः अस्मान् बहुविधान् विषयान् अशिक्षयन् । ते अस्मभ्यं स्वानुभवगम्यानि

अनुसन्धानसाधनादिभिः प्राप्तानि रहस्यानि प्रायच्छन् । पितरौ तु सन्ततीनां कृते जीवनम् अपि समर्पयतः । तेषां सेवा एव परमा सेवा वर्तते चेत् तेषाम् इच्छापूर्तये सन्तत्या सदा प्रयतनीयम् । चाणक्यः पश्चाद् मगधदेशे धनानन्दं पराजित्य चन्द्रगुप्तं राजपदे अस्थापयत् । राज्यस्य महामन्त्री भूत्वा मार्गदर्शनम् अकरोत् । आदर्शराज्यस्य सञ्चालनाय स चन्द्रगुप्तं, तस्य पुत्रं बिन्दुसारम्, पौत्रम् अशोकं च उपादिशत् । चाणक्यस्य विषये एतादृशी वार्ता प्रचलिता अस्ति ।

स ग्रन्थान् अरचयत् । 'चाणक्यनीतिदर्पणम्' इति एकः ग्रन्थः तेन विरचितः अस्ति । अस्मिन् पाठे चाणक्यनीतिदर्पणस्य नीतिश्लोकान् वयं पठामः ।

अर्थ - एकपटक चणक आफ्नो साथी शकटारको घर गए । चणक चाणक्यका पिता थिए । शकटार पनि मगधदेशका मन्त्री थिए । चणक मगधदेशका राजा धनानन्दसँग असन्तुष्ट थिए । किनकि, धनानन्द विलासी क्रूर शासक थिए । चणकको विद्वत्ताको उपयोग गरिन्थ्यो भने राज्यको उन्नति नै हुन्थ्यो । चणकले महामन्त्री पद लिएर विदेशीअरूको आक्रमणबाट राज्यको रक्षा गर्न चाहे । त्यसका विषयमा आफ्नो साथीसँग उनले कुराकानी पनि गरे । धनानन्द मोजमस्तीमा नै डुबेका थिए । कुराकानीमा धनानन्दलाई राजाबाट हटाउन चणकले सल्लाह गरे ।

राज्यमा गुप्तचरअरू हुन्छन् नै । राज्यका विषयमा, जनताका विषयमा र विदेशनीतिका विषयमा जान्न गुप्तचरअरूलाई खटाउने काम राज्यमा हुन्छ । दुर्भाग्यले गुप्तचरका माध्यमबाट धनानन्दले चणकको योजना थाहा पाए । त्यसबाट उनी अत्यन्त क्रुद्ध भए । उनले चणकलाई जेलमा हाले । यतिले उनको मन सन्तुष्ट भएन । राजद्रोहको अभियोगमा ब्राह्मणलाई मृत्युदण्ड दिइनेछ भन्ने समाचार राज्यका कुना-कुनामा फैलाइयो । राजधानीको बिचमा चणकको शिर झुन्ड्याएर धनानन्दले सबै जनतालाई राजद्रोहको परिणामबारे सूचना दिए । आफ्ना पिता चणकको त्यस्तो अवस्था देखेर चाणक्य अत्यन्त दुःखी भए । पिताको दाहसंस्कार गरेर धनानन्दको राज्यपतनका लागि चाणक्यले प्रतिज्ञा गरे ।

त्यसपछि विष्णुगुप्त नामले उनले तक्षशिलानामक अध्ययनसंस्थानमा पढ्न सुरु गरे । आमाबुबाको आज्ञापालनसँगै आमाबुबाले देखाएको बाटोको अनुसरण गर्नु सन्तानको धर्म हो । हाम्रा पुर्खाले हामीलाई धेरै प्रकारका विषयअरू सिकाए । तिनीअरूले हाम्रा लागि

आफ्नो अनुभवद्वारा, अनुसन्धान तथा साधनाबाट प्राप्त रहस्यअरू दिए । झन् आमाबुबा त सन्तानका लागि जीवन पनि सुम्पिदिन्छन् । आमाबुबा र पूर्वजअरूको सेवा नै परम सेवा हो भने तिनीअरूको इच्छापूर्तिका लागि सन्तानले सधैं प्रयत्न गर्नुपर्छ । चाणक्यले पछि मगधदेशमा धनानन्दलाई पराजित गरेर चन्द्रगुप्तलाई राजाको पदमा राखे । राज्यको महामन्त्री भएर मार्गदर्शन गरे । आदर्श राज्यको सञ्चालनका लागि उनले चन्द्रगुप्त, उनका छोरा बिन्दुसार र नाति अशोकलाई पनि उपदेश गरे । चाणक्यका विषयमा यस्तो कुरा प्रचलित छ ।

उनले ग्रन्थअरूको रचना गरे । 'चाणक्यनीतिदर्पणम्' यो एक ग्रन्थ उनले नै रचना गरेका हुन् । यस पाठमा चाणक्यनीतिदर्पणका नीतिश्लोकअरू हामी पढ्छौँ ।

## मननीयम्

(चाणक्यले राजभवनमा राजकुमारअरूलाई उपदेश गरिरहेको चित्र)

ते पुत्रा ये पितुर्भक्ताः स पिता यस्तु पोषकः ।
तन्मित्रं यत्र विश्वासः सा भार्या यत्र निर्वृतिः ॥ १ ॥
नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः ।
नास्ति कोपसमो वह्निर्नास्ति ज्ञानात्परं सुखम् ॥ २ ॥

आलस्योपहता विद्या परहस्ते गतं धनम् ।
अल्पबीजं हतं क्षेत्रं हतं सैन्यमनायकम् ॥ ३ ॥
धनधान्यप्रयोगेषु विद्यासङ्ग्रहणेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ ४ ॥
सत्यं माता पिता ज्ञानं धर्मो भ्राता दया सखा ।
शान्तिः पत्नी क्षमा पुत्रः षडेते मम बान्धवाः ॥ ५ ॥

## प्रथमं पद्यम्

पदच्छेदः - ते, पुत्राः, ये, पितुः, भक्ताः, सः, पिता, यः, तु, पोषकः, तद्, मित्रम्, यत्र, विश्वासः, सा, भार्या, यत्र, निर्वृतिः ।

अन्वयः - ये पितुः भक्ताः, ते पुत्राः (सन्ति) । यः तु पोषकः, स पिता (अस्ति) । यत्र विश्वासः (भवति), तद् मित्रम् (अस्ति) । यत्र निर्वृतिः (भवति), सा भार्या (अस्ति) ।

भावार्थः - पितरौ पुत्रान् पुत्रीन् च जनयित्वा पालनं कुर्वतः । पुत्रेषु पुत्रीषु च पित्रोः भक्तिः भवति । यदि तेषु पितृभक्तिः नास्ति चेत् ते सन्ततयः न भवन्ति । पितरौ सन्ततीनां पोषकौ पालकौ च भवतः । यस्मिन् विश्वासं कर्तुं शक्यते तद् एव मित्रं भवति । मित्रेषु परस्परं विश्वासः बलीयान् भवति । भार्या गृहे आनन्दं जनयति । सा परिवारस्य सौख्याय कार्यं करोति ।

## द्वितीयं पद्यम्

पदच्छेदः - न, अस्ति, कामसमः, व्याधिः, न, अस्ति, मोहसमः, रिपुः, न, अस्ति, कोपसमः, वह्निः, न, अस्ति, ज्ञानात्, परम्, सुखम् ।

अन्वयः - कामसमः व्याधिः नास्ति । मोहसमः रिपुः नास्ति । कोपसमः वह्निः नास्ति । ज्ञानात् परं सुखं नास्ति ।

भावार्थः - कामः इच्छा एव वर्तते । कामेन वशीकृतः मानवः सुखेन जीवनं यापयितुं समर्थः न भवति । अत एव कामतुल्यः रोगः नास्ति । मोहः अविद्यायाः, अज्ञानस्य, निर्बुद्धेश्च नाम वर्तते । मोहेन मानवः भौतिकं वस्तु सत्यं मन्यते । मोहेन बुद्धिः भ्रष्टा भवति । अतः मोहतुल्यः शत्रुः नास्ति । कोपः क्रोधस्य अपरं नाम वर्तते । यथा अग्निः सर्वं भस्मसात्करोति, तथैव कोपः अपि सर्वं विनाशयति । तेन कारणेन एव मोहतुल्यः वह्निः नास्ति । ज्ञानं सन्तोषं जनयति । एतद् परमसुखस्य कारणं वर्तते । तस्मात् कारणाद् ज्ञानात् परं सुखं न विद्यते ।

## तृतीयं पद्यम्

पदच्छेदः - आलस्योपहता, विद्या, परहस्ते, गतम्, धनम्, अल्पबीजम्, हतम्, क्षेत्रम्,

हतम्, सैन्यम्, अनायकम् ।

अन्वयः - विद्या आलस्योपहता (अस्ति) । धनं परहस्ते गतं (कार्यं न साधयति) । अल्पबीजं क्षेत्रं हतम् । अनायकं सैन्यं हतम् ।

भावार्थः - विद्यायाः परमः शत्रुः आलस्यं वर्तते । आलस्येन विद्या विनश्यति । धनेन वस्तूनां क्रयणं भवति । धनेन आवश्यकं कार्यं सम्पादयितुं शक्यते । यदि तद् धनम् अपि स्वपार्श्वे नास्ति, परहस्ते गतम् अस्ति चेत् कार्यं नैव साधयति । क्षेत्रं बीजवपनेन अधिकोत्पादनेन च शोभते । अतः अल्पबीजं क्षेत्रं नष्टम् इव भवति । सैन्यसमूहः राष्ट्रं रक्षति । सैन्यनायकः सैन्यसमूहं परिचालयति । यदि नायकः नास्ति चेत् सैन्यसमूहम् अभीष्टे कार्ये प्रवर्तयितुं न शक्यते । स समूहः प्रयोजनरहितः विलोक्यते ।

## चतुर्थं पद्यम्

पदच्छेदः - धनधान्यप्रयोगेषु, विद्यासङ्ग्रहणेषु, च, आहारे, व्यवहारे, च, त्यक्तलज्जः, सुखी, भवेत् ।

अन्वयः - धनधान्यप्रयोगेषु, विद्यासङ्ग्रहणेषु, आहारे, व्यवहारे च त्यक्तलज्जः (मानवः) सुखी भवेत् ।

भावार्थः - लज्जा उन्नतिम् अवरुणद्धि । धनधान्यानि सन्ति चेत् तेषां प्रयोगः निर्लज्जतया कर्तव्यः । विद्या परमसुखस्य कारणं वर्तते । विद्यया विवेकः प्राप्यते । अतः लज्जां त्यक्त्वा कनिष्ठेभ्यः अपि विद्या ग्रहणीया । आहारः शरीरस्य मस्तिष्कस्य च वृद्धिं करोति । आहारेण बलं प्राप्यते । तेन कारणेन लज्जया विना एव आहारः करणीयः । लज्जया रहितः मानवः व्यवहारकौशलम् अर्जयति । अत एव व्यवहारसम्पादनाय लज्जा त्यक्तव्या । एतेषु कार्येषु त्यक्तलज्जः मानवः सदा सुखेन जीवनं यापयति ।

## पञ्चमं पद्यम्

पदच्छेदः - सत्यम्, माता, पिता, ज्ञानम्, धर्मः, भ्राता, दया, सखा, शान्तिः, पत्नी, क्षमा, पुत्रः, षड्, एते, मम, बान्धवाः ।

अन्वयः - माता सत्यम् (अस्ति) । पिता ज्ञानम् (अस्ति) । भ्राता धर्मः (अस्ति) । सखा

दया (अस्ति) । पत्नी शान्तिः (अस्ति) । पुत्रः क्षमा (अस्ति) । एते षड् मम बान्धवाः (सन्ति) ।

भावार्थः - माता सन्ततेः सर्वथा उन्नतये प्रयतते । सत्यस्य परिपालनेन सर्वथा उन्नतिरेव भवति । अतः मातृरूपेण सत्यं सेवनीयम् । पिता मार्गं दर्शयति । ज्ञानम् अस्मान् सन्मार्गं प्रति नयति । अस्मात् कारणात् पितृरूपाद् ज्ञानाद् निर्दिष्टं कार्यं करणीयम् । भ्राता कार्येषु बलं ददाति । धर्मस्य पालनेन बलं प्राप्यते । अत एव भ्रातृरूपः धर्मः परिपालनीयः । मित्रं सर्वासु अवस्थासु सहैव भवति । मित्ररूपा दया सहैव स्थित्वा साहाय्यार्थं प्रेरयति । शान्तिः सुखस्य कारणम् अस्ति । पत्नी च जीवनस्य सुखस्य हेतुः वर्तते । तस्मात् कारणात् पत्नीरूपा शान्तिः अवलम्बनीया । सन्ततिः पित्रोः गौरवं वर्धयति । क्षमा च तादृशः गुणः वर्तते यस्माद् स्वगौरवं वर्धते । एते षड् मम अर्थात् मानवस्य बान्धवाः सन्ति ।

## शब्दार्थः

| | |
|---|---|
| पोषकः - | पालकः, पालनपोषण गर्ने व्यक्ति, Feeder, Protector |
| भार्या - | जाया, पत्नी, Wife |
| निर्वृतिः - | सन्तृप्तिः, सुखम्, प्रसन्नता, Pleasure, happiness |
| व्याधिः - | रोगः, रोग, Disease |
| रिपुः - | अरिः, शत्रु, Enemy |
| वह्निः - | अग्निः, आगो, Fire |
| बीजम् - | बीजकम्, बिउ, Seed |
| क्षेत्रम् - | कृषिभूमिः, खेत, Field |
| अनायकम् - | नायकरहितम्, नाइके नभएको, Without a leader |
| आहारः - | भोजनम्, खानेकुरा, Food |
| व्यवहारः - | आचरणम्, व्यवहार, Behavior |

त्यक्तलज्जः - लज्जारहितः, लाज त्यागेको, Shameless

सखा - मित्रम्, साथी, Friend

क्षमा - क्षान्तिः, माफी, Apologies

बान्धवाः - स्वजनाः, आफन्त, Relatives

## अभ्यासः

### श्रवणं भाषणं च

१. शिक्षकात् श्रुत्वा अधस्तनानि पदानि अनूच्चारयत

निर्वृतिः, व्याधिः, वह्निः, आलस्योपहता, अल्पबीजम्, अनायकम्, धनधान्यप्रयोगेषु, विद्यासङ्ग्रहणेषु, त्यक्तलज्जः, षडेते ।

२. अधस्तनानि शब्दानि शुद्धतया उच्चारयत

पितृभक्तिः, बलीयान्, वशीकृतः, निर्बुद्धेश्च, बुद्धिभ्रष्टः, भस्मसात्करोति, सैन्यसमूहः, प्रवर्तयितुम्, अवरुणद्धि, मस्तिष्कस्य, व्यवहारकौशलम्, निर्दिष्टम्, भ्रातृरूपः, अवलम्बनीया, स्वगौरवम् ।

३. पाठस्थश्लोकान् यथालयं वाचयत ।

४. अधस्तनं पद्यं शिक्षकस्य साहाय्येन सस्वरं वाचयत

यस्मिन् देशे न सम्मानो न वृत्तिर्न च बान्धवः ।
न च विद्यागमोऽप्यस्ति वासं तत्र न कारयेत् ॥

५. अधस्तनानि ण्वुल्प्रत्ययान्तपदानि कक्षायां श्रावयत

अंशकः, उत्पादकः, उद्धारकः, कारकम्, गणकः, गायिका, गुणकः, ग्राहिका, घटकम्, घातकम्, चालकः, जनकः, दायिका, दाहिका, दीपिका, नाशकम्, निन्दकः, पाठकः ।

६. ण्वुल्प्रत्ययोजनेन पदानि निर्माय श्रावयत

दृश्+ण्वुल् - .................. (पुँल्लिङ्गे)
धृ+ण्वुल् - .................. (पुँल्लिङ्गे)
नी+ण्वुल् - .................. (स्त्रीलिङ्गे)
पच्+ण्वुल् - .................. (नपुंसकलिङ्गे)

पीड्+ण्वुल् - .................. (पुँल्लिङ्गे)

रक्ष्+ण्वुल् - .................. (स्त्रीलिङ्गे)

लिख्+ण्वुल् - .................. (स्त्रीलिङ्गे)

वह्+ण्वुल् - .................. (पुँल्लिङ्गे)

वि-चर्+ण्वुल् - .................. (पुँल्लिङ्गे)

सम्-आप्+ण्वुल् - .................. (नपुंसकलिङ्गे)

## ७. अधस्तनं श्लोकं दृष्ट्वा उत्तरं कथयत

माता रिपुः पिता शत्रुर्बालो येन न पाठ्यते ।
सभामध्ये न शोभन्ते हंसमध्ये बको यथा ॥

(क) कीदृशी माता शत्रुः भवति ?

(ख) सन्ततिं न पाठयति चेत् पिता कः कथ्यते ?

(ग) हंसमध्ये कः न शोभते ?

(घ) मूर्खः कुत्र न शोभते ?

## ८. श्लोकांशान् मेलयित्वा वाचयत

| | |
|---|---|
| ते पुत्रा ये पितुर्भक्ताः | सा भार्या यत्र निर्वृतिः । |
| तन्मित्रं यत्र विश्वासः | नास्ति ज्ञानात्परं सुखम् । |
| नास्ति कामसमो व्याधिः | स पिता यस्तु पोषकः । |
| नास्ति कोपसमो वह्निः | नास्ति मोहसमो रिपुः । |

## ९. अधस्तनं श्लोकं भावार्थं च पठित्वा मातृविषये वदत

राजपत्नी गुरोः पत्नी मित्रपत्नी तथैव च ।
पत्नीमाता स्वमाता च पञ्चैते मातरः स्मृताः ॥

भावार्थः - जीवने मातुः स्थानं सर्वोपरि वर्तते । यतः माता जनयति, लालयति, पालयति, सन्ततिं सबलां च कारयति । राजपत्न्यै मातुः स्थानं देयम् । गुरुः शास्त्राणि उपदिशति । गुरुः जीवनस्य मार्गं दर्शयति । अतः गुरुपत्न्यै च मातुः स्थानं देयम् । मित्रं विपत्सु सहयोगं करोति । तेनैव कारणेन मित्रपत्नी च मातृतुल्या मन्तव्या । एताभिः सह स्वपत्न्याः माता स्वस्यैव माता च कृत्वा पञ्च मातरः भवन्ति ।

अर्थ - जीवनमा आमाको स्थान सबैभन्दा माथि छ । किनकि, आमाले जन्म दिनुहुन्छ, लालनपालन गर्नुहुन्छ र सन्तानलाई बलियो बनाउनुहुन्छ । रानीलाई तिनै आमाको स्थान दिनुपर्छ । गुरुले शास्त्रको उपदेश गर्नुहुन्छ । गुरुले जीवनको बाटो देखाउनुहुन्छ । त्यसैले गुरुआमालाई पनि आमाको स्थान दिनुपर्छ । साथीले आपत्तिमा सहयोग गर्छ । त्यसकारण, साथीकी पत्नीलाई पनि आमाजस्तै मान्नुपर्छ । यीसँगै सास" आमा र आफ्नी आमा गरेर आमा पाँच हुन्छन् ।

१०. अधस्तनं श्लोकं चित्राणि च दृष्ट्वा के पितरः मन्यन्ते ? स्वभाषया सखीन् श्रावयत

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥

(गोलो आकारमा पाँचवटा चित्र राख्ने, सबैभन्दा माथि सानो बच्चालाई बोकेको बुबाजस्तो देखिने मान्छेको चित्र, त्यसको मुनि बायाँपट्टि केही सिकाउँदै गरेको व्यक्तिको चित्र जसका अगाडि किशोर अवस्थाको केटो भएको, दायाँपट्टि चाहिँ कक्षामा पढाउँदै गरेका गुरुको चित्र, बायाँपट्टि मुनि बच्चालाई खाना दिँदै गरेको मान्छेको चित्र, दायाँपट्टि मुनि कुकुर भुक्दै गरेको र कुकुरदेखि डराएर भागेकी सानी बच्चीलाई कुकुरको विपरीत दिशातर्फ एउटा पुरुषले राखेर त्यसलाई कुकुरबाट जोगाएको जस्तो देखिने चित्र, जम्मा यस गोलो आकृतिमा पाँचवटा चित्र हुन्छन् ।)

## पठनम्

१. पाठस्य तृतीयपद्यस्य भावार्थस्य द्रुतपठनं कुरुत ।

२. अधस्तनस्य पद्यस्य मौनपठनं कुरुत

सत्येन धार्यते पृथ्वी सत्येन तपते रविः ।
सत्येन वाति वायुश्च सर्वं सत्ये प्रतिष्ठितम् ॥

३. विपरीतार्थकपदानि परस्परं मेलयत

| | |
|---|---|
| प्रशंसकाः | निर्बलः |
| विश्वासः | निन्दकाः |
| बलीयान् | रिपुः |
| बुद्धिमान् | निर्बुद्धिः |
| मित्रम् | अविश्वासः |
| परिश्रमी | कुमार्गः |
| लौकिकम् | अवनतिः |
| उन्नतिः | अलसः |
| सन्मार्गः | अलौकिकम् |

४. एकस्य पदस्य एकस्माद् अधिकः अर्थः भवति चेत् तत्पदम् अनेकार्थिपदं कथ्यते । अधस्तनानि पदानि तेषामर्थश्च पठित्वा उदाहरणानुसारं द्वे-द्वे वाक्ये रचयत

उदाहरणम् -

अम्बरम् - वस्त्रम्, गगनम् च ।

अहम् अद्य पीतम् अम्बरं धारयामि ।

अद्य अम्बरं स्वच्छम् अस्ति ।

कालः - कृष्णः, समयः च

जडः - मूर्खः, निर्जीवः च

पादः - चरणः, चतुर्थांशः च

अर्थः - अभिप्रायः, धनं च

चरणः - पादः, श्रेणी च

५. अधस्तनं श्लोकं भावार्थं च पठित्वा सन्देशं विमृशत

यावत्स्वस्थो ह्ययं देहो यावन्मृत्युश्च दूरतः ।
तावदात्महितं कुर्यात्प्राणान्ते किं करिष्यति ॥

भावार्थः - मानवशरीरस्य कृते स्वास्थ्यस्य महन्महत्त्वम् अस्ति । स्वस्थः मनुष्यः कार्यं सम्पादयितुं समर्थः भवति । अतः जीवनकाले स्वस्थः सन् आत्महितं कर्तव्यम् । यतः रुग्णः किमपि कर्तुं न शक्नोति । दिवङ्गते अपि कार्यं न सम्पद्यते । यस्य मृत्युः दूरे अस्ति स एव आत्मनः कल्याणकरं कार्यं विदधातुं सक्षमः भवति । यावत् शरीरं स्वस्थं भवति यावत् मृत्युः दूरम् अस्ति तावद् उन्नतये प्रयतनीयम् । यतः मृत्युः निश्चितः वर्तते । मृत्युपश्चाद् मानवः किं करिष्यति !

अर्थः - मानिसको शरीरका लागि स्वास्थ्यको ठुलो महत्त्व छ । स्वस्थ मानिस काम गर्न समर्थ हुन्छ । तसर्थ, जीवनकालमा स्वस्थ रहेर आफ्नो हित हुने काम गर्नुपर्छ । किनकि रोगीले केही गर्न सक्दैन । मृत्यु भएमा पनि काम सम्पन्न हुँदैन । जसको मृत्यु टाढा छ ऊ नै आफ्नो भलो हुने काम गर्न सक्षम हुन्छ । जतिखेरसम्म शरीर स्वस्थ हुन्छ, जतिखेरसम्म मृत्यु टाढा हुन्छ त्यतिखेरसम्म उन्नतिका लागि प्रयास गर्नुपर्छ । किनकि, मृत्यु निश्चित छ । मृत्युपछि मानिसले के नै गर्नेछ र !

## ६. अधस्तनम् अनुच्छेदं पठित्वा प्रश्नान् उत्तरयत

कार्यसम्पादनात् पूर्वं सङ्कल्पः क्रियते । सङ्कल्पः मनसः कार्यम् अस्ति । सङ्कल्पेन विना कार्ये प्रवर्तनम् एव न भवति । अत एव कतिपयेषु संस्कारेषु प्रथमं प्रतिज्ञासङ्कल्पः विधीयते । चाणक्यः अपि धनानन्दं पदच्युतं कर्तुं सङ्कल्पम् अकरोत् । यथा मन्त्रेण गूढं रक्ष्यते तथैव सङ्कल्पः रक्षितव्यः । तस्य वाण्या प्रकाशनं न कर्तव्यम् । वाण्या प्रकाश्यते परन्तु कार्ये न नियोज्यते चेत् व्यर्थं भवति । यदा सङ्कल्पः कार्यरूपेण परिणमते तदा सर्वे जानन्ति एव । मानवस्य वाणी सबला भवितुम् अर्हति । जनव्यवहारे एका उक्तिः प्रचलिता वर्तते, यद् - 'यः कुकुरः बुक्कति स न खर्दति' इति । कार्यं साधयितुं सक्षमतायाः विकासः कर्तव्यः । तस्य कृते अध्ययनम् आवश्यकं भवति, अभ्यासः अनिवार्यः भवति, चिन्तनम् अपि अपरिहार्यं भवति । योजनां कल्पयित्वा पूरणार्थं अस्माभिः प्रयत्नशीलैः भाव्यम् । चाणक्यः तक्षशिलायाम् अध्ययनम् अकरोत् । ततः पितुः मित्रेण शकटारेण सह अमिलत् । चन्द्रगुप्तं च शिष्यं कारयित्वा सैन्यसङ्गठनम् अकरोत् । तत्पश्चाद् एव तेन विजयः प्राप्तः । अतः मनसा कार्यस्य चिन्तनं कृत्वा कथनस्य अपेक्षया कार्ये नियोगः विधातव्यः । उक्तञ्च चाणक्यनीतिदर्पणे -

मनसा चिन्तितं कार्यं वाचा नैव प्रकाशयेत् ।

मन्त्रेण रक्षयेद् गूढं कार्ये चापि नियोजयेत् ॥

(क) सङ्कल्पः कदा क्रियते ?

(ख) सङ्कल्पेन विना किं न भवति ?

(ग) कथं सङ्कल्पः रक्षितव्यः ?

(घ) जनव्यवहारे का उक्तिः प्रचलिता वर्तते ?

(ङ) कथं चाणक्येन विजयः प्राप्तः ?

अर्थ - काम गर्नुभन्दा अगाडि सङ्कल्प गरिन्छ । सङ्कल्प मनको काम हो । सङ्कल्प विना काममा प्रवृत्ति हुँदैन । त्यसैले कतिपय संस्कारअरूमा पहिला प्रतिज्ञासङ्कल्प गरिन्छ । चाणक्यले पनि धनानन्दलाई पदच्युत गर्न सङ्कल्प गरे । जसरी मन्त्रद्वारा गोप्य रहस्यको रक्षा गरिन्छ त्यसरी नै सङ्कल्पको रक्षा गर्नुपर्छ । त्यसलाई वाणीद्वारा व्यक्त गर्नुहुँदैन । बोलेर काममा लागिएन भने व्यर्थ हुन्छ । जतिखेर सङ्कल्प कामका रुपमा बदलिन्छ त्यतिखेर सबैले थाहा पाइहाल्छन् नै । मानिसको बोली सबल हुनुपर्छ । बोलीचालीमा एउटा भनाइ प्रचलित छ, 'जुन कुकुरले भुक्छ त्यसले टोक्दैन ।' काम सम्पन्न गर्न क्षमताको विकास गर्नुपर्छ । त्यसका लागि अध्ययन आवश्यक हुन्छ, अभ्यास अनिवार्य हुन्छ र चिन्तन पनि अपरिहार्य हुन्छ । योजना सोचेर पूरा गर्नका लागि हामीअरू प्रयासरत हुनुपर्छ । चाणक्यले तक्षशिलामा अध्ययन गरे । त्यसपछि बुबाका साथी शकटारलाई भेटे । चन्द्रगुप्तलाई शिष्य बनाएर सेनाको सङ्गठन बनाए । त्यसपछि नै तिनले विजय प्राप्त गरे । त्यसैले मनले काम सोचेर भन्नुको सट्टा काममा लाग्नुपर्छ । भनिएको छ चाणक्यनीतिदर्पणमा -

मनले सोचेको काम कसैले पनि बोलीबाट व्यक्त नगरोस् । मन्त्रले गूढ रहस्यलाई गोप्य राखेजसरी राखेर काममा लागोस् ।

## ७. रेखाङ्किताक्षराणां शुद्धोच्चारणं विधाय अधस्तनानि पदानि पठत

पोषकः, विश्वासः, निर्वृतिः, बलीयान्, परिवारस्य, सौख्याय, कामसमः, व्याधिः, वह्निः, वशीकृतः, निर्बुद्धेः, वस्तु, विनाशयति, अल्पबीजम्, विद्या, विनश्यति, आवश्यकम्, बीजवपनेन, विलोक्यते, व्यवहारः, अवरुणद्धि, विवेकः, कनिष्ठः, शरीरस्य, मस्तिष्कस्य, वृद्धिम्, कौशलम्, मानवः, जीवनम्, सत्यम्, शान्तिः, बान्धवाः, सर्वथा, सेवनीयम्, सन्मार्गः, निर्दिष्टम्, सर्वासु, अवस्थासु, सहैव, गौरवम्, वर्तते, षड् ।

## ८. अधस्तनं चित्रवर्णनं पठित्वा शीर्षकं निर्धारयत

(चित्र : सडकको पेटीमा झुत्रो लगाएर बसेको एउटा केटोलाई त्यही सडकमा हिंड्दै गरेकी १२-१३ वर्षकी केटीले आफूले खाँदै गरको बिस्कुट दिँदै छे । केटो लिनलाई हात थाप्दै छ । हेर्दा धेरै दिनको भोको जस्तो देखिन्छ । केटीका बुबाआमा त्यो देखेर खुसी देखिन्छन् । उसले दिँदै गरेको हेरिरहेका हुन्छन् ।)

यानमार्गस्य पार्श्वे पदमार्गः अस्ति । तस्मिन् पदमार्गे एकः किशोरः उपविष्टः अस्ति । तस्य वस्त्रं जीर्णम् अस्ति । स च बहुसमयाद् बुभुक्षितः दृश्यते । तस्मिन् एव मार्गे एका किशोरी गच्छन्ती अस्ति । तस्याः नाम रबिना मगरः अस्ति । सा हस्ते पिष्टिकां गृहीत्वा मार्गे चलन्ती अस्ति । तं किशोरं बुभुक्षितं मत्वा सा पिष्टिकां किशोराय दातुम् उद्यता अस्ति । किशोरः च तस्याः चेष्टया प्रसन्नः दृश्यते । सः अञ्जलिं करोति । किशोरी तस्मै सर्वां पिष्टिकां ददाति । यतः सा पिष्टिकां खादन्ती मार्गे चलन्ती आसीत् । पितरौ तां प्रतीक्ष्य तस्याः व्यवहारं पश्यन्तौ आस्ताम् । पुत्र्याः तादृशं कार्यं दृष्ट्वा तौ प्रसन्नौ जातौ । सा च सहयोगं कृत्वा अतीव प्रफुल्लिता अभवत् ।

अर्थ - सडकको छेउमा फुटपाथ छ । त्यस फुटपाथमा एउटा किशोर बसेको छ । उसको कपडा थोत्रो छ । ऊ धेरै समयदेखि भोकाएको देखिन्छ । त्यही बाटामा एउटी किशोरी हिँड्दै छे । उसको नाम रबिना मगर हो । ऊ हातमा बिस्कुट लिएर बाटामा हिँड्दै छ । त्यो केटालाई भोकाएको मानेर ऊ बिस्कुट केटालाई दिन तयार छे । केटो उसको चेष्टा देखेर खुसी देखिन्छ । ऊ अँजुली थाप्छ । केटी उसलाई सबै बिस्कुट दिन्छे । किनकि ऊ बिस्कुट खाँदै बाटामा हिँड्दै थिई । आमाबुबा उसलाई कुरेर उसको व्यवहार हेर्दै थिए । छोरीको त्यस्तो काम देखेर उनीअरू खुसी भए । ऊ पनि सहयोग गरेर अत्यन्त खुसी भई ।

## लेखनम्

१. अधस्तनानि पदानि लिखत

भक्ताः, निर्वृतिः, पोषकः, पितृभक्तिः, वशीकृतः, बुद्धिः, भस्मसात्करोति, ऋयणम्, स्वपार्श्वे, राष्ट्रम्, सङ्ग्रहणम्, त्यक्तलज्जः, पितृरूपाद्, अवलम्बनीया, स्वगौरवम् ।

२. वाक्येषु प्रयोगं कुरुत

पिता, विश्वासः, भक्तिः, भार्या, व्याधिः, रिपुः, वह्निः, सुखम्, विद्या, क्षेत्रम्, सुखी, भवेत्, सखा, मम, बान्धवाः ।

३. अधस्तनानां पदानां स्वभाषया अर्थ लिखत

पोषकः, निर्वृतिः, कोपसमः, आलस्योपहता, अल्पबीजम्, धनधान्यप्रयोगेषु, त्यक्तलज्जः, भ्राता, बान्धवाः ।

४. पाठस्य उपान्तिमस्य श्लोकस्य अनुलेखनं कुरुत ।

५. पाठस्य अन्तिमस्य श्लोकस्य श्रुतलेखनं कुरुत ।

६. अधस्तनं श्लोकं तस्य भावार्थ च पठित्वा प्रदत्तान् प्रश्नान् उत्तरयत

विद्वान् प्रशस्यते लोके विद्वान् सर्वत्र गौरवम् ।

विद्यया लभते सर्वं विद्या सर्वत्र पूज्यते ॥ पेज ४७

भावार्थः - ज्ञानविज्ञानसमन्वितानां शास्त्राणाम् अध्येता विद्वान् भवति । विदुषः संसारे सर्वत्र प्रशंसा विधीयते । विद्वान् समाजस्य देशस्य च गौरवं वर्धयति चेद् स्वयमपि अन्येषां गौरवं भवति । अस्मिन् लोके विद्यायाः अतीव महत्त्वं वर्तते । विद्यया सर्वं प्राप्तुं शक्यते । विद्यायाः सर्वत्र पूजा च भवति ।

(ज्ञान र विज्ञानले युक्त शास्त्रको अध्ययन गर्ने व्यक्ति विद्वान् हुन्छ । विद्वान्को संसारमा सबै ठाउँमा प्रशंसा गरिन्छ । विद्वान्ले समाज र देशको गौरव बढाउँछ भने आफ" पनि अरूको गौरव भएर बाँच्दछ । यस संसारमा विद्याको अत्यन्त महत्त्व छ । विद्याद्वारा सबै पाउन शकिन्छ । विद्याको सबैतिर पूजा पनि हुन्छ ।)

(क) कः विद्वान् भवति ?

(ख) कस्य सर्वत्र प्रशंसा विधीयते ?

(ग) विद्वान् कस्य कस्य गौरवं वर्धयति ?

(घ) कया सर्वं प्राप्तुं शक्यते ?

(ङ) कस्याः पूजा भवति ?

७. पाठस्य श्लोकान् भावार्थान् च पठित्वा निम्नप्रश्नानाम् उत्तराणि लिखत

(क) पितरौ किं कुर्वतः ?

(ख) किं मित्रं भवति ?

(ग) भार्या किमर्थं कार्यं करोति ?

(घ) कीदृशः मानवः सुखेन जीवनं न यापयति ?

(ङ) मोहेन मानवः किं सत्यं मन्यते ?

(च) किमर्थं मोहतुल्यः वह्निः नास्ति ?

(छ) कस्मात् परं सुखं न विद्यते ?

(ज) विद्यायाः परमशत्रुः कः वर्तते ?

(झ) कीदृशं धनं कार्यं न साधयति ?

(ञ) क्षेत्रं कथं शोभते ?

(ट) सैन्यसमूहः किं करोति ?

(ठ) धनधान्यानां प्रयोगः कथं कर्तव्यः ?

(ड) केभ्यः अपि विद्या ग्रहणीया ?

(ढ) आहारः किं करोति ?

(ण) केन उन्नतिरेव भवति ?

(त) कीदृशं कार्यं करणीयम् ?

(थ) मानवस्य षड् बान्धवाः के सन्ति ?

८. अधस्तनम् अनुच्छेदं सम्यग् अधीत्य प्रदत्तानि कार्याणि कुरुत

२०१६ तमे ईशवीयाब्दे 'फिजियोलोजी' (शरीरविज्ञानम्) इति विधायां योसिनोरी ओहसुमी इति वैज्ञानिकः नोबेलपुरस्कारं प्राप्नोत् । स जापानदेशस्य वैज्ञानिकः अस्ति । तेन अटोफेजी (Autophagy) इति सिद्धान्तस्य प्रतिपादनं विहितम् । अटोफेजी अस्य अभिप्रायः भवति यद्, स्वयं भक्षणं वा स्वयं खाद्यवस्तुनः निर्माणम् । तस्मिन् सिद्धान्ते उपवासस्य महत्त्वं प्रकाशितं वर्तते । यतः उपवासस्य अवस्थायां उदरं रिक्तं भवति । अतः तस्याम् अवस्थायां फ्याट इत्यस्य पाचनस्य कार्यं प्रारभ्यते । तस्य एव इन्धनत्वं स्वीक्रियते । तेन मधुमेहादयः रोगाः विनश्यन्ते । एतमेव सिद्धान्तमाधारीकृत्य चिकित्सकाः प्रतिदिनं षोडशघण्टाः यावत् उपवासार्थं परामृशन्ति साम्प्रतम् । व्यायामेन विना एव शरीरस्य तौलन्यूनीकरणार्थं मानवाः एतद्विधेः अवलम्बनं कुर्वन्ति । सरलविधिरूपेण अस्य प्रयोगः दिनानुदिनं वर्धमानः दृश्यते । एतादृशी वैज्ञानिकतां विलोक्य अस्माकं पूर्वजाः उपवाससंस्कृतेः विकासम्

अकुर्वन् । अत एव अस्माकं संस्कृतौ वैदिककालादेव उपवासस्य परम्परा विकसिता दृश्यते ।

(क) एकपदेन उत्तरयत

(अ) कदा ओहसुमी नोबेलपुरस्कारं प्राप्नोत् ?

(आ) ओहसुमी कस्यां विधायां पुरस्कारं प्राप्नोत् ?

(इ) ओहसुमी कस्य सिद्धान्तस्य प्रतिपादनम् अकरोत् ?

(ई) अटोफेजी-सिद्धान्ते कस्य महत्त्वं प्रकाशितं वर्तते ?

(ख) एकवाक्येन उत्तरयत

(अ) अटोफेजी अस्य अभिप्रायः कः ?

(आ) उपवासेन कथं मधुमेहादयः रोगाः विनश्यन्ते ?

(इ) चिकित्सकाः साम्प्रतं किं परामृशन्ति ?

(ई) अस्माकं पूर्वजाः किमर्थम् उपवाससंस्कृतेः विकासम् अकुर्वन् ?

(ग) भाषिककार्यं कुरुत

(अ) 'ईशवीयाब्दे' अत्र कयोः पदयोः मेलनम् अस्ति ?

(आ) 'तादृशी' अस्य विपरीतार्थिपदम् अनुच्छेदाद् विचित्य लिखत ।

(इ) 'प्रत्यहम्' अस्य पर्यायवाचिपदम् अनुच्छेदे किम् प्रयुक्तम् ?

(ई) 'उपवासस्य अवस्थायां उदरं रिक्तं भवति' इति वाक्यं भूतकाले परिवर्तयत ।

अर्थ : सन् २०१६ मा फिजियोलोजीतर्फ योशिनोरी ओहसुमी नाम गरेका वैज्ञानिकले नोबेल पुरस्कार प्राप्त गरे । उनी जापानका वैज्ञानिक हुन् । उनले अटोफेजी (Autophagy) सिद्धान्तको प्रतिपादन गरे । अटोफेजी भनेको आफैँ खाने वा आफैँ खाना तयार गर्ने हो । यस सिद्धान्तमा व्रतको महत्त्व बताइएको छ । व्रतका बेला पेट खाली हुन्छ । त्यस्तो अवस्थामा फ्याट पच्न थाल्दछ । पेटले इन्धनका रूपमा त्यसलाई प्रयोग गर्न थाल्दछ । जसले गर्दा सुगर आदि रोग नष्ट हुन्छन् । आजकल यही सिद्धान्तलाई आधार मानेर कतिपय डाक्टरहरूले हरेक दिन १६ घण्टा उपवास बस्ने सल्लाह दिन थालेका छन् । विना व्यायाम वजन कम गर्न मानिसअरू सरल विधिका रूपमा यस विधिको प्रयोग गर्दछन् । यस्तो वैज्ञानिकतालाई हाम्रा पूर्वजले उहिले नै बुझेर व्रतलाई संस्कृतिका रूपमा विकास

गरेका थिए । अतः हाम्रो संस्कृतिमा वैदिक कालदेखि नै व्रतको परम्परा विद्यमान छ ।

## व्याकरणानुशीलनम्

१. तालिकायाः रूपाणि पठत

| विधिलिङ्लकारः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| भू-धातुः<br>प्रथमः पुरुषः | भवेत् | भवेताम् | भवेयुः |
| मध्यमः पुरुषः | भवेः | भवेतम् | भवेत |
| उत्तमः पुरुषः | भवेयम् | भवेव | भवेम |
| गम्-धातुः<br>प्रथमः पुरुषः | गच्छेत् | गच्छेताम् | गच्छेयुः |
| मध्यमः पुरुषः | गच्छेः | गच्छेतम् | गच्छेत |
| उत्तमः पुरुषः | गच्छेयम् | गच्छेव | गच्छेम |
| कथ्-धातुः<br>प्रथमः पुरुषः | कथयेत् | कथयेताम् | कथयेयुः |
| मध्यमः पुरुषः | कथयेः | कथयेतम् | कथयेत |
| उत्तमः पुरुषः | कथयेयम् | कथयेव | कथयेम |
| कृ-धातुः<br>प्रथमः पुरुषः | कुर्यात् | कुर्याताम् | कुर्युः |
| मध्यमः पुरुषः | कुर्याः | कुर्यातम् | कुर्यात |
| उत्तमः पुरुषः | कुर्याम् | कुर्याव | कुर्याम |

२. निर्देशानुसारेण विधिलिङ्लकारे क्रियारूपाणि पूरयत

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | पश्येत् | ........ | ........ |
| मध्यमः पुरुषः | ........ | ........ | ........ |
| उत्तमः पुरुषः | ........ | ........ | ........ |

| | | | |
|---|---|---|---|
| प्रथमः पुरुषः | ........ | ........ | दद्युः |
| मध्यमः पुरुषः | ........ | ........ | ........ |
| उत्तमः पुरुषः | ........ | ........ | ........ |

| | | | |
|---|---|---|---|
| प्रथमः पुरुषः | ........ | ........ | ........ |
| मध्यमः पुरुषः | ........ | शृणुयातम् | ........ |
| उत्तमः पुरुषः | ........ | ........ | ........ |

| | | | |
|---|---|---|---|
| प्रथमः पुरुषः | ........ | ........ | ........ |
| मध्यमः पुरुषः | ........ | ........ | ........ |
| उत्तमः पुरुषः | ........ | ........ | लिखेम |

| | | | |
|---|---|---|---|
| प्रथमः पुरुषः | रचयेत् | ........ | ........ |
| मध्यमः पुरुषः | ........ | ........ | ........ |
| उत्तमः पुरुषः | ........ | ........ | ........ |

३. कोष्ठकाधारेण विधिलिङ्लकारस्य रूपैः रिक्तस्थानं पूरयत

(क) यूयम् आयुष्मन्तः .............. । (भू-मध्यमपुरुषे)

(ख) आवां स्वमार्गे ................. । (चल्-उत्तमपुरुषे)

(ग) बाले कवितां .............. । (लिख्-प्रथमपुरुषे)

(घ) नार्यः कार्यालयं .................... । (गम्-प्रथमपुरुषे)

(ङ) अहं भैरवं ............... । (पूज्-उत्तमपुरुषे)

४. अधस्तनं श्लोकं पठित्वा विधिलिङ्लकारस्य क्रियापदानि विचित्य लिखत

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ।
शास्त्रपूतं वदेद् वाक्यं मनः पूतं समाचरेत् ॥

५. पूर्वसवर्णसन्धिनियमान् पठत

ग् ज् ड् द् ब् + ह = (हस्य स्थाने विकल्पेन) घ झ ढ ध भ (वर्णेषु परिवर्तनम्)

अथवा

| | |
|---|---|
| ग् + ह = ग्घ | यथा - वाग् + हरिः = वाग्घरिः |
| ज् + ह = ज्झ | यथा - अज् + हलौ = अज्झलौ |
| ड् + ह = ड्ढ | यथा - षड् + हरयः = षड्ढरयः |
| द् + ह = द्ध | यथा - तद् + हितम् = तद्धितम् |
| ब् + ह = ब्भ | यथा - अब् + ह्रासः = अब्भ्रासः |

६. सन्धितगं रूपं लिखत

षड्+हयाः ..............

वाग्+हीनः .............

महद्+हानिः ............

प्राग्+हसित्वा ...............

जगत्+हिताय .............

७. सन्धिविच्छेदं कुरुत

महद्धास्यम् .....................

वणिग्घसति .....................

उद्धरति .....................

तद्धि .....................

प्रावृड्ढसति .....................

## रचनात्मकः अभ्यासः

१. अधस्तनं पद्यम् आश्रित्य शिक्षकस्य सहयोगेन 'पृथिव्याः रत्नानि' इति विषये एकम् अनुच्छेदं रचयत

पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥

२. काञ्चन नीतिकथां श्रावयित्वा तस्याः सन्देशं विमृश्य स्वभाषया लिखत ।

३. अधस्तनं श्लोकं पठित्वा विवेकिनां स्वभावविषये कक्षायां कथयत

गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् ।
वर्तमानेन कालेन प्रवर्तन्ते विचक्षणाः ॥

### श्रवणपाठः

पौरस्त्यपरम्परायां चत्वारः पुरुषार्थाः सन्ति - धर्मः, अर्थः, कामः, मोक्षश्च । आधुनिकः समाजः अर्थमेव पुरुषार्थं मन्यते । साम्प्रतं मनुष्याणां प्रमुखं ध्येयम् अर्थोपार्जनं दृश्यते । अर्थोपार्जनाय मानवाः यत्किमपि कर्तुं प्रयतमानाः दृश्यन्ते । व्यवसायं कृत्वा अर्थोपार्जनं कर्तुं शक्यते परन्तु वञ्चनेन अर्थोपार्जनं कदापि न कर्तव्यम् । अर्थस्य कृते जनाः अन्यायं कुर्वन्ति । एतदर्थमेव भ्रष्टाचारं कुर्वन्ति । अधुना वञ्चकाः यत्र-तत्र दृश्यन्ते । परोपकारनिरताः मानवास्तु न्यूनायमानाः सन्ति । परोपदेशे समाजसेवायाः पाठं पाठयित्वा स्वयमेव स्वार्थवशात् अर्थसङ्ग्रहे जनाः निमग्नाः परिलक्ष्यन्ते । अन्यायोपार्जितं द्रव्यं क्षणमात्रं तिष्ठति । तस्य स्थायित्वं न भवति । श्रमेण अर्जितं द्रव्यं बहुकालं तिष्ठति । अन्यायेन आर्जितं धनं तु कारणेन विना एव विनश्यति । यदि कश्चिद् अपि अन्यायं करोति चेत् स कदाचित् दण्डित एव भवति । महान् दार्शनिकः चाणक्यः स्वग्रन्थे चाणक्यनीतिदर्पणे 'अन्यायोपार्जितं धनं दश वर्षाणि यावत् तिष्ठति' इति कथयति । अस्य अभिप्रायः भवति, अन्यायेन यदि कश्चिद् अपि लाभः भवति चेत् स क्षणिकः भवति । तस्य उपभोगः बहुकालपर्यन्तं न सम्भवति इति । 'प्राप्ते तु एकादशे वर्षे तद् धनं समूलं विनश्यति' इति चाणक्यस्य उद्घोषः वर्तते । यथा -

अन्यायोपार्जितं द्रव्यं दश वर्षाणि तिष्ठति ।
प्राप्त एकादशे वर्षे समूलं च विनश्यति ॥

षष्ठः पाठ

# पाठप्रवेशः

चित्रनिर्देश लटरम्म फल लागेको कुनै रुख

चित्रनिर्देश पहाडको तलबाट नदी बगिरहेको

पिबन्ति नद्यः स्वयमेव नाम्भः
स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति सस्यं खलु वारिवाहाः
परोपकाराय सतां विभूतयः ॥

चित्रनिर्देश यशोदाले गाई दुहुँदै गरेको

परोपकाराय फलन्ति वृक्षाः
परोपकाराय वहन्ति नद्यः ।
परोपकाराय दुहन्ति गावः
परोपकारार्थमिदं शरीरम् ॥

**भावः**

नदीहरू आफ्नो पानी स्वयं पिउँदैनन् । रुखहरूले आफूमा लागेको फल आफैँ खाँदैनन् । बादलहरूले आफूले वर्षा गरेर उब्जाएको अन्न आफैँ खाँदैनन् । साधुहरूको जीवन त सधैँ अरूकै उपकारका निम्ति हुन्छ ।

परोपकारकै लागि रुखमा फल लाग्छन् । परोपकारकै निम्ति नदीहरू बग्छन् । परोपकारकै निम्ति गाईले दूध दिन्छन् । त्यसैले यो शरीरलाई पनि परोपकारका निम्ति लगाउनुपर्छ ।

# परोपकारी शिबिः

पुरुवंशे समुत्पन्नः शिबिः परमधार्मिकः राजा आसीत् । स परोपकारपरायणः, भगवद्भक्तः च आसीत् । अतः राजभवनस्य द्वारात् कः अपि याचकः रिक्तहस्तः न निवर्तते स्म । तस्य परोपकरणशीलतायाः चर्चा यत्र तत्र प्रसृता आसीत् ।

राज्ञः शिबेः कीर्तिः स्वर्गलोकपर्यन्तं प्रसृता । इन्द्रः, अग्निः च तस्य त्यागवृत्तेः परीक्षणं कर्तुम् ऐच्छताम् । इन्द्रः श्येनस्य, अग्निः च कपोतस्य रूपं धृत्वा राज्ञः शिबेः राज्यं प्राप्नुताम् । अग्रे अग्रे कपोतः, पृष्ठे पृष्ठे श्येनः उड्डीय तौ राजभवनं प्राविशताम् ।

चित्रनिर्देश

**यज्ञानुष्ठान गरिरहेका राजा शिबिको शरणमा एउटा परेवा आएको र अगाडिपट्टि सम्मुखमा चिल बसेको । अरू मन्त्री, ब्राहमण पुरोहितहरू पनि छन् ।**

राजा शिबिः कस्मिंश्चित् धार्मिके अनुष्ठाने निरतः आसीत् । तदानीम् एव क्रन्दनं कुर्वन् कपोतः शिबेः निकटं प्राप्य अकथयत्– राजन् ! अहं भवतः शरणापन्नः अस्मि, कृपया मां पातु । क्षणानन्तरं हि श्येनः कपोतम् अनुगच्छन् तत्रैव सम्प्राप्तः ।

श्येनः राजन् ! असौ कपोतः मम आहारः अस्ति । भवान् तु अतीव परोपकारी अस्ति । अहम् अत्यन्तं बुभुक्षितः अस्मि । कपया भवतः निकटस्थं कपोतं मह्यं यच्छतु ।

कपोतः राजन् ! शरणागतस्य रक्षणं धर्मः अस्ति । भवान् अत्यन्तं धार्मिकः अस्ति इति अहं श्रुतवान् आसम् । श्येनः मां भक्षयिष्यति । कृपया मम प्राणरक्षां करोतु ।

राजा श्येन ! अयं कपोतः त्वद्भयात् मा शरणापन्नः अस्ति । शरणापन्नस्य त्यागः न उचितः । जीवरक्षणं च मनुष्यधर्मः । अतः अहम् इमं कपोतं तुभ्यं दातुं न शक्नोमि । एतद्विकल्पेन यत्किमपि याचस्व, अहं दास्यामि ।

श्येनः राजन् ! भवान् कीदृशस्य धर्मस्य विषये वदन् अस्ति ? क्षुधया पीडिताय भोजनस्य दानम् अपि धर्मः एव । यदि बुभुक्षया मम मृत्युः भविष्यति, तदा

मम परिवारस्य शावकाः मरिष्यन्ति । एकस्य तुच्छस्य कपोतस्य रक्षया बहवः निष्प्राणाः भविष्यन्ति । अतः हठं परित्यज्य कपोतं मुञ्चतु, अहं भक्षयिष्यामि ।

राजा शरणापन्नस्य रक्षणम् इव महान् धर्मः अन्यः नास्त्येव । अतः केनचित् अन्येनैव आहारेण बुभुक्षां शमय । याचस्व, किं ददानि ?

श्येनः राजन् ! भवान् तु जानाति एव, प्रकृत्या खलु वयं मांसभोजिनः । अतः मांसम् ऋते न किञ्चित् वाञ्छामि । यदि भवान् कपोतं दातुं न इच्छति चेत् कपोतस्य देहभारसमं स्वमांसं यच्छतु ।

राजा हे श्येन ! त्वं यावत् इच्छसि, तावत् मांसं यच्छामि । मम विनाशशीलेन शरीरेण यदि कपोतस्य प्राणरक्षा भविष्यति चेत् अयं मम कृते परोपकाराय महान् अवसरः ।

चित्रनिर्देश

अन्य कुरा पहिलेको चित्रको जस्तै । राजा शिबि आफ्नो मासुका साथमा तराजुको एकापट्टि बसेका छन् । अर्कोपट्टि परेवा छ । चिल अग( ाडिपट्टि बसेर हेरिरहेको छ ।

राजा तुलायाः एकस्मिन् खण्डे कपोतम् अस्थापयत् । अपरस्मिन् खण्डे स्वस्य मांसं कर्तयन् स्थापयितुं प्रारभत । स यावत् अपि मांसम् अस्थापयत्, कपोतपक्षीयः तुलाभागः उपरि नागतः । अन्ते राजा स्वयं तुलाम् आरुह्य श्येनं प्रति अवदत्- तव आहारार्थम् अहं तुलायां स्वात्मानम् अस्थापयम्, भक्षय माम् । तदानीम् एव सहसा आकाशात् पुष्पवृष्टिः अभवत् । श्येनकपोतौ इन्द्राग्निरूपेण स्वस्वरूपं प्रादर्शयताम् । इन्द्रः अकथयत्– राजन् । धन्यः भवान् । भवतः त्यागशीलतायाः परीक्षणाय आवां छद्मरूपेण अत्र सम्प्राप्तौ । भवादृशः जनः संसारे दुर्लभः खलु, यः स्वकीयान् प्रियान् प्राणान् दत्त्वा अपि अन्यान् उपकरोति ।

ततः इन्द्राग्नी राज्ञः शरीरम् पूर्ववत् अक्षतं सम्पाद्य स्वर्गं प्रति अगच्छताम् । राजा शिबिः तत् धार्मिकम् अनुष्ठानं समाप्नोत् । स चिरं राज्यं कृत्वा अन्ते भगवद्धाम अगच्छत् ।

## पाठस्य भावः

पुरुवंशमा जन्मिएका शिबि अत्यन्तै धार्मिक, परोपकारी एवं भगवद्भक्त राजा थिए । उनको द्वारबाट कोही पनि रित्तो हात फर्कंदैनथ्यो । जताततै फैलिएको उनको कीर्तिको चर्चा स्वर्गसम्म पुग्यो ।

इन्द्र र अग्नि उनको त्यागवृत्तिको परीक्षा लिन चिल र परेवाको रूप धारण गरी आए । चिलबाट लेखेटिँदै परेवा राजाको शरणमा आइपुग्यो । राजा त्यतिवेला धार्मिक अनुष्ठान गर्दै थिए । राजाको परोपकारी स्वभावको प्रशंसा गर्दै चिलले आफ" धेरै भोकाएकाले परेवालाई छाडिदिन आग्रह गऱ्यो तर शरणमा आएको प्राणीको रक्षा गर्नु धर्म भएको भन्दै राजाले त्यसको सट्टामा अरू केही माग्न अनुरोध गरे ।

चिलले परेवाको सट्टा परेवाको तौलबराबरको आफ्नै मासु दिने भए हुन्छ भनेपछि राजाले तराजुमा एकातिर परेवालाई राखी अर्कोतिर आफ्नो शरीरको मासु काटेर हाल्न लागे । जति मासु राखे पनि परेवातिरको भाग न उचालिएकाले तराजुमा राजा आफैँ बसे र चिललाई आफूलाई खान अनुरोध गरे । त्यत्तिकैमा आकाशबाट पुष्पवृष्टि भयो । इन्द्र र अग्नि चिल र परेवाको रूप छाडी आफ्नै रूपमा आए । राजा शिबिको त्यागशीलताको परीक्षा गर्न आफूहरू त्यसरी आएको भन्दै राजाको प्रशंसा गरे । राजाको शरीर पहिलेको जस्तै बनाइदिएर उनीहरू स्वर्गतिर लागे । राजा शिबि पनि आफ्नो यज्ञानुष्ठान सकी चिर कालपर्यन्त राज्य गरेर अन्तमा भगवान्का धाममा गए ।

## शब्दार्थाः

| | |
|---|---|
| राजा | नृपः, राजा, King |
| परोपकारः | अन्योपकारः, अरूको भलाइ, Benefit others |
| भगवद्भक्तः | देवभक्तः, ईश्वरको भक्त, Devotee of God |
| राजभवनम् | नृपभवनम्, राजाको दरबार, Royal palace |
| द्वारम् | प्रतीहारः, ढोका, Door |
| याचकः | याचिता, माग्ने, Beggar |

| | |
|---|---|
| कीर्तिः | यशः, नाम कमाउनु, Fame |
| स्वर्गलोकः | सुरलोकः, स्वर्ग, Heaven |
| इन्द्रः | मघवा, स्वर्गका राजा, King of Heaven |
| अग्निः | अनलदेवः, अग्निदेवता, God fire |
| श्येनः | शशादनः, चिल, Eagle |
| कपोतः | पारावतः, परेवा, Pigeon |
| राज्यम् | देशः, राज्य, Country |
| क्रन्दनम् | रोदनम्, रुनु कराउनु, Cry |
| निकटम् | समीपम्, नजिकै, Near |
| कृपया | दयया, कृपाले, Please |
| आहारः | भोजनम्, खानेकुरा, Food |
| बुभुक्षितः | क्षुधितः, भोकाएको, Hungry |
| त्यागः | त्यागभावः, त्यागको भावना, Abandonment |
| मनुष्यः | मानवः, मानिस, Human |
| दानम् | प्रदानम्, दिनु, Donation |
| मृत्युः | मरणम्, मर्नु, Death |
| परिवारः | परिजनाः, परिवार, Family |
| रक्षणम् | त्राणम्, रक्षा, Protection |
| अन्यः | अपरः, अर्को, Another |
| शरीरम् | वपुः, शरीर, Body |
| तुला | तोलनिका, तराजु, Scales |
| पुष्पम् | कुसुमम्, फूल, Flower |
| वृष्टिः | वर्षा, वर्षात, Rain |

## श्रवणं भाषणञ्च

१. पाठस्य कथां ध्यानेन शृणुत ।

२. कथाम् एकैकशः उच्चारयत ।

३. सख्युः उपान्तिमम् अनुच्छेदं श्रुत्वा अधस्तनानां प्रश्नानाम् उत्तराणि कथयत

(क) राजा कपोतम् कुत्र अस्थापयत् ?

(ख) अन्ते राजा कुत्र आरोहत् ?

(ग) तदानीम् आकाशात् केषां वृष्टिः अभवत् ?

(घ) कौ इन्द्राग्निरूपेण स्वस्वरूपं प्रादर्शयताम् ?

(ङ) अन्ते इन्द्रः किम् अकथयत् ?

४. अधस्तनं पद्यं सम्यक् उच्चारयत

आत्मार्थं जीवलोकेऽस्मिन् को न जीवति मानवः ।
परं परोपकारार्थं यो जीवति स जीवति ॥

यो जीवलोकमा आफ्ना लागि त को बाँच्दैन र ? अरूको उपकारका लागि जो बाँच्छ, त्यो चाहिँ बाँचेको हो ।

५. शिक्षकात् श्रुत्वा अधस्तनानि पदानि स्पष्टम् अनुवाचयत

इन्द्राग्नी, पूर्ववत्, अक्षतम्, समाप्नोत्, सम्पाद्य, स्वर्गम्, राजा, शिबिः, धार्मिकम्, राज्ञः, शरीरम्, अनुष्ठानम्, चिरम्, राज्यम्, भगवद्धाम ।

६. पाठप्रवेशस्य पद्ययोः सामूहिकवाचनं कुरुत ।

७. पाठस्य एव पदैः निर्मितानि वाक्यानि सम्यक् उच्चार्य श्रावयत

(क) प्रजानां हितचिन्तकः राजा सर्वेषां प्रियः भवति ।

(ख) भक्ताः भगवतः भक्तिं कृत्वा भगवद्धाम गमिष्यन्ति ।

(ग) सर्वेषां शरीरं विनाशि अस्ति ।

(घ) माता भोजनं सम्पाद्य परिवारस्य सदस्यान् भोजयति ।

(ङ) छात्राः परीक्षार्थं चिरम् अभ्यासं कुर्वन्ति ।

८. सत्यवाक्ये 'आम्' इति वदत, असत्यवाक्ये तु 'नो' इति वदत

क) शिबिः पुरुवंशे समुत्पन्नः आसीत् ।

(ख) शिबिः परमः अधार्मिकः राजा आसीत् ।

(ग) राजभवनस्य द्वारात् कः अपि याचकः रिक्तहस्तः न निवर्तते स्म ।

(घ) शिबेः परोपकरणशीलतायाः चर्चा तस्य देशे एव प्रसृता आसीत् ।

(ङ) इन्द्रः, अग्निः, वायुः च तस्य त्यागवृत्तेः परीक्षणं कर्तुम् ऐच्छताम् ।

९. पाठकथां कक्षायां स्वमातृभाषया श्रावयत ।

१०. पाठस्य कथायाः सन्देशं पञ्चवाक्यैः वर्णयत ।

## पठनम्

१. पाठस्य द्वितीय-तृतीययोः अनुच्छेदयोः द्रुतपठनं कुरुत ।

२. पाठस्य उपान्तिमस्य अनुच्छेदस्य लेख्यचिहनानुकूलं पठनं कुरुत ।

३. पाठस्य प्रथमस्य अनुच्छेदस्य मौनपठनं कुरुत ।

४. बोधपाठं पठत

राजकुमारः सिद्धार्थः भ्रमणार्थं प्रायः उपवनं गच्छति स्म । एकदा स उपवनं गतः आसीत् । तदानी स कस्यचन पक्षिणः क्रन्दनध्वनिम् अशृणोत् । सिद्धार्थः ध्वनिदिशं प्रति अधावत् । किञ्चित् अग्रे गत्वा स भूमौ पतितं हंसम् अपश्यत् । हंसः बाणेन विद्धः आसीत् । स हंसम् उत्थाप्य स्वस्य अङ्के अस्थापयत् । स हंसस्य शरीरे विद्धं बाणम् अपि अपाकरोत् ।

क्षणानन्तरं देवदत्तः तत्र प्राप्नोत् । हंसं सिद्धार्थस्य अङ्के दृष्ट्वा स अकथयत्– सिद्धार्थ ! हंसं मह्यं देहि । सिद्धार्थः प्रत्युदतरत्– न ददामि । देवदत्तः अकथयत्– एष मया बाणेन निपातितः अस्ति । अतः हंसः मम अस्ति । मह्यं देहि । सिद्धार्थः अकथयत्– अहम् एतस्य रक्षकः अस्मि । अतः एष मम हंसः अस्ति । न ददामि । सिद्धार्थ-देवदत्तयोः मध्ये विवादः अभवत् । तौ विवादस्य समाधानाय राजसभां प्रति अगच्छताम् । तत्र राजा शुद्धोदनः अकथयत्– हंसम् उभयोः मध्ये स्थापय । तदनु हंसः यस्य पार्श्वे गच्छति, तस्य एव भविष्यति । हंसः सिद्धार्थस्य पार्श्वे अगच्छत् । सिद्धार्थः बाणविद्धस्य हंसस्य औषधोपचारं च अकरोत् । अतः प्रहर्तुः रक्षकः एव महान् भवति इति अयं कथाप्रसङ्गः प्रमाणीकरोति ।

राजकुमार सिद्धार्थ घुम्नका लागि प्राय बगैंचामा जान्थे । एक दिन उनी बगैंचामा गएका थिए । त्यति नै वेला उनले कुनै पक्षीको कराएको आवाज सुने । सिद्धार्थ आवाज आएतिरै दौडिए । केही अगाडि गएर उनले भुइँमा लडिरहेको हाँसलाई देखे । हाँसलाई बाण लागेको थियो । उनले हाँसलाई उठाएर आफ्नो काखमा राखे । उनले हाँसको शरीरमा गाडिएको बाण पनि झिकिदिए ।

एक छिनपछि देवदत्त त्यहीँ आइपुग्यो । हाँसलाई सिद्धार्थको काखमा देखेर उसले भन्यो– सिद्धार्थ ! हाँस मलाई देऊ । सिद्धार्थले भने– दिन्नँ । देवदत्तले भन्यो– यो हाँसलाई मैले बाणले लडाएको हुँ । त्यसैले हाँस मेरो हो । मलाई देऊ । सिद्धार्थले भन्यो– म यसको रक्षक हुँ । त्यसैले यो मेरो हाँस हो । दिन्नँ । सिद्धार्थ र देवदत्तका बीचमा विवाद भयो । ती दुबै विवादको समाधानका लागि राजसभातिर गए । त्यहाँ राजा शुद्धोदनले भने– हाँस तिमीहरू दुईका बीचमा राख । त्यसपछि हाँस जोसँग जान्छ, उसकै हुने छ । हाँस सिद्धार्थसँग गयो । सिद्धार्थले बाण लागेको हाँसको औषधोपचार पनि गरे । त्यसैले प्रहार गर्नेभन्दा रक्षक नै महान् हुन्छ भन्ने कुरा यो कथाप्रसङ्गले प्रमाणित गर्छ ।

५. बोधपाठस्य आधारेण अधस्तनान् प्रश्नान् उत्तरयत

(क) राजकुमारः सिद्धार्थः भ्रमणार्थं कुत्र गच्छति स्म ?

(ख) सिद्धार्थः किम् अशृणोत् ?

(ग) सिद्धार्थः ध्वनिदिशं प्रति किम् अकरोत् ?

(घ) सिद्धार्थः कम् अपश्यत् ?

(ङ) कः बाणेन विद्धः आसीत् ?

(च) स कम् अङ्के अस्थापयत् ?

(छ) क्षणानन्तरं तत्र कः प्राप्नोत् ।

(ज) सिद्धार्थ-देवदत्तयोः मध्ये किम् अभवत् ?

(झ) राजा शुद्धोदनः किम् अकथयत् ?

(ञ) हंसः कस्य पार्श्वे अगच्छत् ?

६. बोधपाठस्य सन्देशं कथयत ।

७. बोधपाठस्य आधारेण अधः विलुप्तानि पदानि वदत

सिद्धार्थः अकथयत्– .......... एतस्य .......... अस्मि । .......... एष मम .......... अस्ति । .......... ददामि । सिद्धार्थ-देवदत्तयोः .......... विवादः .......... । तौ .......... समाधानाय .......... प्रति अगच्छताम् । .......... राजा शुद्धोदनः .........– हंसम् .......... मध्ये स्थापय । .......... हंसः .......... पार्श्वे .........., तस्य एव .......... । हंसः सिद्धार्थस्य .......... अगच्छत् ।

८. अहिंसायाः विषये बोधपाठाधारेण कक्षाविमर्श कुरुत ।

९. अधस्तनानि चित्रवर्णनपरकाणि वाक्यानि पठित्वा चित्रं रचयत

(क) एकः वृक्षः अस्ति ।

(ख) वृक्षे शाखाः सन्ति ।

(ग) शाखासु पत्राणि सन्ति ।

(घ) तत्र फलानि च सन्ति ।

(ङ) पक्वानि फलानि भूमौ च पतितानि सन्ति ।

## लेखनम्

१. पाठस्य कथायाः संवादस्य आधारेण एकवाक्येन उत्तरयत

(क) कपोतः कस्य आहारः अस्ति ?

(ख) कः अत्यन्तं बुभुक्षितः अस्ति ?

(ग) शरणागतस्य रक्षणं किम् अस्ति ?

(घ) कपोतः कस्य भयात् राज्ञः शरणापन्नः आसीत् ?

(ङ) कस्य त्यागः न उचितः ?

(च) जीवरक्षणं कस्य धर्मः ?

(छ) राजा कपोतं कस्मै दातुं न शक्नोति ?

(ज) कपोतस्य विकल्पेन राजा किं दातुं शक्नोति ?

(झ) क्षुधया पीडिताय कस्य दानं धर्मः ?

(ञ) श्येनस्य मृत्युः भविष्यति चेत् के मरिष्यन्ति ?

२. पाठाधारेण रिक्तस्थानं पूरयत

(क) हठं .......... कपोतं मुञ्चतु, .......... भक्षयिष्यामि ।

(ख) शरणापन्नस्य .......... इव .......... धर्मः अन्यः .......... ।

(ग) याचस्व, .......... ददानि ?

(घ) राजन् ! .......... तु जानाति एव, .......... खलु वयं मांसभोजिनः ।

(ङ) अयं .......... कृते .......... महान् अवसरः ।

३. 'पिबन्ति नद्यः स्वयमेव नाम्भः' इति पद्यं पूरयित्वा पद्यस्य सरलार्थं लिखत ।

४. अधस्तनपदैः निर्मितानि वाक्यानि पाठाद् अन्विष्य लिखत

स्वस्य, उपरि, पुष्पवृष्टिः, स्वस्वरूपम्, भवतः ।

५. पाठाधारेण कोष्ठकात् समुचितं पदम् आदाय रिक्तस्थानं पूरयत

(क) श्येनः ........ पक्षी अस्ति । (शाकाहारी, मांसाहारी)

(ख) कपोतः ........ शरणागतः आसीत् । (श्येनस्य, राज्ञः)

(ग) राजा ........ अकृन्तत् । (स्वशरीरस्य, अजस्य)

(घ) शिबिः ........ राज्यम् अकरोत् । (अचिरम्, चिरम्)

(ङ) श्येनः ........ आसीत् । (बुभुक्षितः, पिपासितः)

६. सरलैः वाक्यैः पाठस्य सारांशं लिखत ।

७. पाठात् संयुक्ताक्षरयुक्तानि दश पदानि चित्वा लिखत

यथा– सिद्धार्थः

८. पाठात् अधस्तनानां पदानां विपर्ययपदानि अन्विष्य रिक्तस्थानं पूरयत

| समूहः 'क' | समूहः 'ख' |
|---|---|
| हसनम् | .......... |
| दूरम् | .......... |
| अत्र | .......... |
| पापम् | .......... |
| जन्म | .......... |
| विनाशः | .......... |
| ग्रहणम् | .......... |

## रचनात्मकः अभ्यासः

१. श्रुतानां समाजसेवकानां नाम-कार्यसूची रचयत ।

२. मञ्जूषायाः आधारेण चित्रानुरूपाणि वाक्यानि रचयत

यथा–

(क) युवकः वृद्धं सेवते ।

एउटा युवकले एक वृद्धको सेवा गरिरहेको चित्र

मानिसहरूले चौतारो बनाइरहेको चित्र

(ख) ....................................

(ग) ..........................

विद्यार्थीहरूले विद्या( लयको वरिपरि सफा गरिरहेको चित्र

डक्टरहरूले रोगीको परीक्षण गरिरहेको चित्र

(घ) ..........................

**मञ्जूषा**

| |
|---|
| जनाः, चिकित्सन्ति, छात्राः, रचयन्ति, युवकः, वृद्धम्, चिकित्सकाः, स्वच्छीकुर्वन्ति, रुग्णान्, जनाश्रयम्, सेवते, विद्यालयम् |

## व्याकरणानुशीलनम्

१. उदाहरणानुसारेण वाक्यानि रचयत

उदाहरणम्– वृक्षाः परोपकाराय फलन्ति ।

| | | |
|---|---|---|
| वृक्षाः | | वर्षन्ति |
| नद्यः | | चिकित्सन्ति |
| गावः | | भवन्ति |
| मेघाः | परोपकाराय | फलन्ति |
| वैद्याः | | वहन्ति |
| सज्जनाः | | दुहन्ति |

२. तालिकायाः वर्तमानकालिकैः क्रियापदैः क्रमतः वाक्यानि पूरयत

(क) छात्रः कथां .......... ।

(ख) बालिके कवितां .......... ।

(ग) पाठकाः पत्रिकां .......... ।

(घ) त्वं निबन्धं .......... ।

(ङ) युवाम् अनुच्छेदं .......... ।

(च) यूयं काव्यं .......... ।

(छ) अहं लेखं .......... ।

(ज) आवां मुक्तकं .......... ।

(झ) वयं उपनिषदं .......... ।

| पुरुषः ⬇ | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | पठति | पठतः | पठन्ति |
| मध्यमः | पठसि | पठथः | पठथ |
| उत्तमः | पठामि | पठावः | पठामः |

३. उपरि तालिकां दृष्ट्वा रूपावलीतालिकां रचयत

(क) खाद्-धातुः

(ख) पच्-धातुः

(ग) चल्-धातुः

(घ) भू(भव्)-धातुः

(ङ) दृश्(पश्य्)-धातुः

४. अधस्तन्याः तालिकायाः आधारेण विशेषण-विशेष्ये मेलयत

| विशेषणम् | विशेष्यम् |
|---|---|
| गच्छन् | बालिकाः |
| पठन्ती | लेखकाः |
| चलत् | पर्यटकौ |

| | |
|---|---|
| खादन्त्यः | यात्रिकः |
| लिखन्तः | महिला |
| पश्यन्तौ | यानम् |

| लिङ्गम् ↓ | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| पुंलिङ्गम् | गच्छन् | गच्छन्तौ | गच्छन्तः |
| स्त्रीलिङ्गम् | गच्छन्ती | गच्छन्त्यौ | गच्छन्त्यः |
| नपुंसकलिङ्गम् | गच्छत् | गच्छती | गच्छन्ति |

५. कोष्ठकात् शतृप्रत्ययान्तं पदं चित्वा वाक्यानि पूरयत

(क) .......... क्रीडकः प्रसीदति । (क्रीडन्, क्रीडन्ती, क्रीडत्)

(ख) .......... जलं शोभते । (पतत्, पतती, पतन्ति)

(ग) ते वृक्षम् .......... सन्ति । (आरोहन्, आरोहन्तौ, आरोहन्तः)

(घ) यात्रिणौ .......... स्तः । (भ्रमन्तौ, भ्रमन्त्यौ, भ्रमन्ति)

(ङ) धाविका .......... अस्ति । (धावत्, धावन्तः, धावन्ती)

सप्तमः पाठ

# दृढनिश्चयः

सप्तमकक्षायाः वार्षिकपरीक्षायाः परिणामः प्रकाशितः अभूत् । रामलालः कक्षायाः सर्वोत्कृष्टः अभूत् । परन्तु तस्य अग्रजः मोहनः अनूत्तीर्णः जातः । सः अतीव दुःखितः अभूत् । तौ द्वावेव विद्यालयात् गृहं प्रत्यागच्छताम् । रामलालस्तु हर्षितः आसीत् । सर्वे जनाः तं प्रशंसन्तः आसन् । मोहनः दुःखितः अभूत् । सः रुदन् आसीत् । तस्मिन्नेव समये तस्य पितामही तत्र आगतवती ।

चित्रम्
(घर, सबैसगँग खुसी मन(
इरहेको बालक र अलि उत(
पट्टि रोइरहेको बालक र उसल(
ाई हजुरआमाले सम्झाएको )

पितामही- अयि मोहन ? किम् जातम् ? कथं रोदिषि ?

मोहन- ( रुदन् ) किमपि नाभूत् ।

पितामही- अत्र किमपि कारणमस्ति, सत्यं वद ।

मोहन- भो पितामहि ! अद्य अस्माकं परीक्षायाः परिणामः प्रकाशितः । मम अनुजः रामलालः सर्वोत्कृष्टः अभूत्, अहं तु......। पितामहि ! इतःपरम् अहं पठितुं न शक्नोमि, पठनाय विद्यालयं च कदापि न गच्छामि । सर्वे सखायः मां दृष्ट्वा हसन्ति एव । अहं जीवने किमपि कर्तुं न शक्नोमि । (सः उच्चैः रोदिति।)

पितामही - मोहन ! मा रुदिहि। चिन्ता मा कुरु। धैर्यं धारय । अहमपरस्मिन् वर्षे अवश्यमेव उत्तीर्णः भविष्यामीति दृढनिश्चयी भव । अत्र सावधानेन श्रृणु । थोमस एल्वाइडिसन महोदयः अपि छात्रसमये किमपि न जानाति स्म । कालान्तरे सः महान् वैज्ञानिकः जातः । कालिदासः बाल्यकाले मूर्खः आसीत् । पश्चात् सः

महाकविपदेन विभूषितः । त्वमपि बालः असि । परिश्रमेण, दृढनिश्चयेन मानवः इहलोके, परलोके च महान् जायते । अस्मिन् विषये अपरमपि जीवनवृत्तान्तं श्रावयामि ।

## भाषानुवाद

कक्षा सातको वार्षिकपरीक्षाको नतिजा प्रकाशन भयो । रामलाल सर्वोत्कृष्ट भयो तर उसको दाइ मोहन अनूत्तीर्ण भयो। ऊ खिन्न भयो । दुवै दाजुभाइ विद्यालयबाट घर फर्किन्छन् । रामलाल खुसी छ । सबैले उसको प्रशंसा गर्दछन् । मोहन दुःखी छ । ऊ रुँदैछ । त्यही समयमा उसकी हजुरआमा त्यहाँ आउनुहुन्छ ।

हजुरआमा- मोहन ! के भयो किन रुन्छौ?

मोहन- =(रुँदै)केही भएको छैन ।

हजुरआमा- यहाँ केही कारण त छ,साँचो बोल ।

मोहन - हजुरआमा! आज हाम्रो परीक्षाको नतिजा प्रकाशन भयो । रामलाल सर्वोत्कृष्ट भयो तर म.....।

हजुरआमा! अब म पढ्न सक्दिन र पढ्नका लागि विद्यालय पनि जादिनँ। सबै साथीहरू मलाई हेरेर हाँदस्छन् । अब म जीवनमा केही गर्न सक्दिनँ । (ऊ ठूलो स्वरले रुन्छ। )

हजुरआमा- मोहन नरोऊ। चिन्ता नगर । धैर्य गर । म अर्को वर्षमा जसरी पनि उत्तीर्ण हुन्छु भन्ने दृढ निश्चय गर । ल सावधान भएर सुन ।

थोमस एलवाइडिसन पनि विद्यार्थी जीवनमा केही पनि जान्दैनथे तर उनी कालान्तरमा महान वैज्ञानिक बने । कालिदास बाल्यकालमा मूर्ख थिए । कालान्तरमा महाकविपदद्वारा विभूषित भए। तिमी पनि सानै छौ । अथक परिश्रम र दृढनिश्चयद्वारा मानिस यो लोक र अर्को लोकमा समेत पूज्य हुन्छ ।

यो विषयमा म अर्को पनि जीवनवृत्तान्त सुनाउँछु ।

## भगवद्भक्तः ध्रुवः

अस्मिन् संसारे बहवः प्राणिनः जायन्ते म्रियन्ते च । ते सर्वे अमरतां लब्धुं न शक्नुवन्ति । ये जीवने महत्त्वपूर्णं कार्यं साधयन्ति ते एव अमरतां लभन्ते । अस्मिन् धराधाम्नि

परोपकारपरायणाः त्यागमूर्तयः कदाचिदेव समुद्भवन्ति । तेषां सद्विचारैः, आदर्शजीवनैः, दृढसङ्कल्पैः, कर्तव्यनिष्ठ-व्यवहारैश्च जनाः कृतार्थाः भवन्ति । तेषु सत्पात्रेषु भगवद्भक्तः ध्रुवः सर्वप्रथमं समायाति ।

वनमा तपस्या गरेको ध्रुवको चित्र

पुरा सूर्यवंशे उत्तानपादनामकः राजा बभूव । तस्य ज्येष्ठपत्नी सुनीतिः आसीत् । उत्तानपादस्य, सुनीतेः पुत्ररूपेण ध्रुवः अजायत । उत्तानपादस्य अपरा भार्या सुरुचिः आसीत् । सुरुचेरपि एक पुत्रः आसीत् । तस्य नाम उत्तमः । तौ द्वावेव बालौ प्रतिदिनं वर्धमानौ आस्ताम् ।

एकदा राजा स्वस्य अङ्के उत्तमं निधाय लालयन् आसीत् । तस्मिन् एव समये ध्रुवः तत्र आगच्छत् । पितुः अङ्के उत्तमं दृष्ट्वा बालकः ध्रुवः अपि तत्र स्थातुम् ऐच्छत् । किन्तु सुरुचिः तत्र एव आसीत् । पितुः अङ्के स्थातुकामं ध्रुवं दृष्ट्वा सा अवदत्-'अरे मूर्ख ! त्वं कुत्र पश्यसि ? नृपस्य अङ्के स्थातुं त्वं न अर्हसि । तत्र तु मम पुत्रस्य उत्तमस्य एव अधिकारः ।' इति । विमातुः एतादृशं कठोरं वचनं श्रुत्वा ध्रुवः दुःखितो बभूव । सः रुदन् स्वस्य मातुः समक्षे अगच्छत् । सर्वं च वृत्तान्तम् अवोचत् ।

पुत्रस्य विलापं श्रुत्वा माता सुनीतिः अपि दुःखिता अभूत् । किन्तु सा अवदत् - 'पुत्र ! दुःखी मा भव, धैर्यं धारय, ईश्वरं भजस्व, त्वं महान् भविष्यसि ।'

मातुः वचनं श्रुत्वा ध्रुवः तदानीं शान्तो बभूव । किन्तु विमातुः वचनं स्मारं स्मारं सः भृशं खिद्यति स्म । ततः मातुः वचनानुसारं पञ्चवर्षीयः सः तपसे वनं जगाम । ध्रुवः वनं गच्छन् आसीत् । तस्मिन् एव समये तत्र नारदः सम्प्राप्तः । वने गच्छन्तं बालं दृष्ट्वा सः अवदत् - 'बाल ! कुत्र गच्छन् असि ?' ध्रुवः सर्वं वृत्तान्तं नारदाय निवेद्य अकथयत्, 'तपसा भगवन्तम् आराधयितुं वनं गच्छन् अस्मि ।' नारदः अवोचत् - 'ध्रुव ! त्वं तु बाल एवासि । अधुना तव क्रीडादिषु रमणस्य समयो वर्तते । तव वयः तपस्यायै समुचितं नास्ति ।' किन्तु बालकस्य ध्रुवस्य निश्चयः दृढः आसीत् । सः अकथयत् - 'अहम् एतत् सर्वं न जानामि । अहं तु तपसा भगवन्तं तोषयितुम् इच्छामि ।' ध्रुवस्य एतादृशं निश्चयं श्रुत्वा नारदः तपस्यायाः विधिं उपदिदेश । बालकः ध्रुवोऽपि नारदस्य उपदेशानुसारं वनं गत्वा तपः चकार ।

ध्रुवस्य कठोरतपसा भगवान् शीघ्रम् एव प्रसन्नः अभूत् । सः ध्रुवस्य समक्षे प्रकटितो

बभूव । बालकः ध्रुवः भगवन्तं दृष्ट्वा तस्य प्रार्थनाम् अकरोत् । ध्रुवस्य मनोभावं ज्ञात्वा भगवान् अपि तस्मै दुर्लभं वरम् अददात् । वरं सम्प्राप्य ध्रुवः गृहं प्रत्यागच्छत् । अस्य आगमनेन सर्वे प्रसन्नाः बभूवुः । समये सम्प्राप्ते राजा ध्रुवस्य राज्याभिषेकं चकार । बहुवर्षाणि राज्यस्य पालनं कृत्वा ध्रुवः ध्रुवलोकम् अगमत् ।

यद्यपि ध्रुवः अधुना अस्माकं समक्षे नास्ति । किन्तु तस्य उदारतमं चरितं स्मृत्वा जनाः अद्यापि तं प्रशंसन्ति । तस्य दृढनिश्चयं च अद्यापि उदाहरन्ति ।

यो संसारमा धेरै प्राणीहरू जन्मन्छन् र मर्दछन् पनि । तिनीहरू सबै अमर हुन सक्दैनन् । जसले जीवनमा महत्त्वपूर्ण काम गर्दछन् तिनीहरू नै अमर बन्दछन् । यो पृथ्वीमा परोपकारी र त्यागी मानिसहरू कहिले काहीँ जन्मिन्छन् । तिनीहरूको सद्विचार, आदर्श-जीवन, दृढ्सङ्कल्प, र कर्तव्यनिष्ठव्यवहारद्वारा मानिसहरू कृतार्थ हुन्छन् । ती नै सत्पात्रहरू मध्ये ध्रुवको नाम सबैभन्दा पहिला आउँछ । सत्ययुगमा सूर्यवंशमा उत्पन्न उत्तानपाद नाम गरेका राजा थिए। सुनीति उनकी जेठी पत्नी थिइन् । बाबा उत्तानपाद र आमा सुनीतिको पुत्रको रूपमा ध्रुव जन्मिए । उनकी अर्की पनि पत्नी थिइन् । उनको नाम सुरुचि थियो । सुरुचिको पनि एउटा छोरो थियो । उसको नाम उत्तम हो । ती दुवै बालक दिनप्रतिदिन बढ्दै थिए ।

एकदिन राजाले आफ्नो काखमा उत्तमलाई राखेर माया गर्दै थिए । त्यही समयमा ध्रुव त्यहाँ आए । बाबाको काखमा उत्तमलाई देखेर उनले पनि त्यहाँ बस्नका लागि इच्छा गरे तर उनकी सौतेनी आमा त्यहीँ थिइन् । राजाको काखमा बस्न इच्छा गरेको ध्रुवलाई देखेर सुरुचिले रोकिन् र भनिन् । हे मूर्ख ! तिमी कहाँ हेर्दैछौ राजाको काखमा बस्न तिमीले पाउनेछैनौ । त्यहाँ त मेरो छोराको मात्र अधिकार छ । सौतेनी आमाको यस्तो वचन सुनेर ध्रुव दुःखी भए । त्यही बेला आमाको छेउमा गएर सबै कुरा सुनाए । ध्रुवको विलाप सुनेर सुनीति पनि दुःखी भईन् र उनले भनिन् -छोरा दुःखी नबन । धैर्य गर । तिमी महान हुनेछौ । आमाको यस्तो कुरा सुनेर त्यसबेला ध्रुव शान्त भए तर उनी सौतेनी आमाको कुराले बारम्बार खिन्न हुन्थे । आमाको वचन अनुसार पाँच वर्षका ध्रुव तपस्या गर्न वनमा गए । ध्रुव बाटोमा हिड्दै थिए त्यही समयमा उनलाई नारदले देखेर भने- बालक तिमी कहाँ जाँदैछौ। तपस्याद्वारा ईश्वर प्राप्तिका लागि वनमा जाँदैछु, ध्रुवले भने । फेरि नारदले भने - ध्रुव तिमी सानै छौ । यो तिम्रो तपस्या गर्ने बेला होइन खेलमा रमाउने बेला हो। तिम्रो उमेर तपस्याका लागि उचित छैन। तर बालक ध्रुवको दृढनिश्चय

थियो । उनले भने - म यो केही पनि जान्दिन । म त तपस्याद्वारा भगवानलाई खुसी बनाउन चाहन्छु । ध्रुवको दृढनिश्चय देखेर नारद ज्यादै प्रसन्न भए । उनले ध्रुवलाई तपस्याको विधि उपदेश गरेर आफ्नो बाटो लागे । त्यसपछि ध्रुवले वनमा पुगेर नारदको उपदेशानुसार तपस्या गरे ध्रुवको कठोर तपोबलले भगवान चाँडै खुसी हुनुभयो । ध्रुवको अगाडि प्रकट हुनुभयो । बालक ध्रुवले भगवानको प्रार्थना गरे । त्यसपछि ध्रुवको मनोभाव बुझेर दुर्लभ वर दिनुभयो । वर पाएर ध्रुव घर फर्किए । उनको आगमनले त्यहाँका सबै जना खुसी भए । कालान्तरमा ध्रुवको राज्याभिषेक गरे । यद्यपि ध्रुव हामीमाझ छैनन् तर उनको उदार चरित्रलाई स्मरण गरेर मानिसहरू अहिले पनि उनको प्रशंसा गर्दछन् । उनको दृढनिश्चय अहिले पनि उदाहरणका रूपमा प्रस्तुत गर्दछन् ।

## शब्दार्थाः

प्राणिनः=जन्तवः= जीवजन्तु अचभबतगचभक

परोपकारपरायणाः=परेषामुपकारे निरताः=परोपकारलाई नै जीवनको लक्ष्य ठान्ने Philanthropy is the goal of life

त्यागमूर्तयः= त्यागशीलाः = त्यागी महापुरुषहरू great men

समुद्भवन्ति=उद्भवन्ति= प्रकट हुन्छन् Appear

आस्ताम्=अभूताम् = थिए Were

अङ्के= क्रोडे=काखमा In the lap

निधाय= संस्थाप्य=राखेर By keeping

लालयन्=पालयन् =माया गर्दै Loving

विमातुः=मातृसपत्न्याः=सौतेनी आमाको Stepmother

अवोचत् = अवदत् = भनिन् She said

जगाम= अगच्छत् = गए Went

दृढनिश्चयं = दृढसंकल्पं = दृढनिश्चयले युक्त With determination

## अभ्यासः

### श्रवणं भाषणं च

१. अधोलिखितान् शब्दान् स्पष्टम् उच्चारयत ।

उत्तानपादः, कर्तव्यनिष्ठः,भगवद्भक्तः, दृढनिश्चयः, दृष्ट्वा, पञ्चवर्षीयः,

२. पाठस्य एकैकमनुच्छेदं क्रमेण एकाकी श्रावयत ।

३. शिक्षकस्य मुखात् अन्तिमम् अनुच्छेदं श्रुत्वा तस्य अर्थं विचारयत ।

४. अधः प्रदत्तम् अनुच्छेदं पठित्वा शिक्षकं श्रावयत ।

जगदीशचन्द्रवसुः एकः प्रसिद्धः वैज्ञानिकः आसीत् ।तस्य जन्मः१८५८ तमे ईशवीयवर्षे भारतस्य बङ्गालप्रान्तस्य एकस्मिन् ग्रामे अभवत् । सः कोलकाताविश्वविद्यालये भौतिकशास्त्रम् अपठत् । कालान्तरे च कोलकातानगरस्य प्रेजिडेन्सीमहाविद्यालये भौतिकशास्त्रस्य प्राध्यापकः अभवत् । जगदीशचन्द्रवसुः"वृक्षेषु अपि जीवनं भवति , ते अपि दुःखिनः भवन्ति"इति अनुसन्धानम् अकरोत् । स्वविचारं प्रदर्शयितुं सः "क्रैष्टोग्राफः" नामकस्य यन्त्रस्य निर्माणम् अकरोत् । अनेन आविष्कारेण स : विश्वप्रसिद्धःअभवत्।

जगदीशचन्द्रवसु एक प्रसिद्ध वैज्ञानिक थिए । उनको जन्म ईस्वीत् संवित् १८५८ मा भारतको बङ्गालप्रान्तको कुनै एक गाउँमा भएको थियो । उनले कोलकाता विश्वविद्यालयमा भौतिकशास्त्रको अध्ययन गरे । केही समयपछि कोलकातानगरको प्रेजिडेन्सीमहाविद्यालयमा भौतिकशास्त्रको प्राध्यापक भए । जगदीशचन्द्रवसुले रूखहरूमा पनि जीवन हुन्छ । तिनीहरू पनि दुःखी हुन्छन् भन्ने कुराको अनुसन्धान गरे । उनले आफ्नो विचार प्रदर्शन गर्न क्रैस्टोग्राफ नामक यन्त्रको निर्माण गरे । यो आविष्कारद्वारा उनी विश्वप्रसिद्ध भए ।

५. अधोलिखितानां शब्दानाम् नेपालीभाषायाम् अर्थं श्रावयत ।

दुर्लभः, अङ्के, विमाता , निधाय , वर्धमानः स्मृत्वा

६. पाठस्य आधारेण एकपदेन उत्तरं दत्त ।

(क) उत्तानपादः कस्य युगस्य राजा आसीत् ?

(ख) पितुः अङ्के कः आसीत्?

(ग) ध्रुवस्य माता का ?

(घ) विमातुः वचनं श्रुत्वा ध्रुवः कीदृशः अभूत्?

(ङ) वनगमनकाले ध्रुवः कति वर्षीयः आसीत्?

७. पाठस्य आधारेण सत्यकथने आम् असत्यकथने च न इति वदत ।

(क ध्रुवस्य माता सुरुचिः अस्ति ।

(ख)उत्तानपाद त्रेतायुगस्य राजा आसीत्।

(ग) उत्तानपादस्य द्वे भार्ये आस्ताम्।

(घ ध्रुवः तपसे वनमगच्छत् ।

(ङ) ध्रुवः नारदं प्रति उपदिष्टवान्।

८. श्रवणपाठं श्रुत्वा उत्तरं दत्त ।

(क) अनुशासनं किमस्ति ?

(ख) अनुशासनं विना किं न भवति ?

(ग) कुत्र कुत्र च अनुशासनस्य महत्त्वमस्ति ?

(घ) अनुशासनं विना किं भवति ?

(ङ) विशेषेण कस्य कृते अनुशासनम् आवश्यकम् ?

## पठनम्

१. ध्रुवस्य जीवनवृत्तस्य सस्वरं पठनं कुरुत ।

२. लेख्यचिह्नानि विचार्य पाठस्य तृतीयमनुच्छेदं पठत ।

३. पाठस्य अन्तिमस्य अनुच्छेदस्य निरवच्छिन्नपठनं कुरुत।

४. पाठस्य एकैकमनुच्छेदं क्रमेण एकाकी श्रावयत ।

५. शिक्षकात् ध्रुवचरित्रं श्रुत्वा परस्परं विमृशत ।

४. पाठस्य तृतीयं चतुर्थं च अनुच्छेदं पठित्वा शुद्धान् शब्दान् चिनुत ।

(क) अ) दृस्ट्वा आ) दृश्ट्वा ई) दृष्ट्वा

(ख) अ) सुरुची आ) सुरुचिः ई) शुरूचिः

(ग) अ) निश्चयः आ) निस्चयः ई) नीश्चयः

(घ) अ) बर्सीयः आ) वर्षियः ई) वर्षीयः

(ङ) अ) अतिव आ) अतीव ई) अतीब

५. अधः प्रदत्तानि उत्तराणि पठित्वा प्रश्नान् निर्मापयत।

क) नृपस्य द्वे भार्ये आस्ताम् ।

ख) विमातुः वचनेन ध्रुवः दुःखितः अभूत्।

ग) ध्रुवस्य विमाता सुरुचिः आसीत् ।

घ) सः तपस्यार्थं वनमगमत् ।

(ङ) नारदः ध्रुवम् अपृच्छत् ।

६. अधोलिखितानां शब्दानां विच्छेदं कुरुत ।

द्वावेव, बाल्यकालादेव, तस्मिन्नेव, तत्रैव, चासीत्, नैव

७. अनुच्छेदं पठित्वा उत्तरं दत्त ।

नेपालदेशे लुम्बिनीनामकं स्थानम् अस्ति । प्राचीनकाले तत्र एकः नृपः आसीत् । तस्य नाम शुद्धोदनः । तस्य ज्यष्ठ-भर्यायाः नाम मायादेवी आसीत् । तयोः पुत्रस्य नाम सिद्धार्थः । सिद्धार्थस्य जन्मतः सप्तदिनपश्चात् माता मायादेवी परलोकम् अगच्छत् । ततः विमाता गौतमी सिद्धार्थम् अपालयत् । यशोधरा सिद्धार्थस्य भार्या आसीत् । तयोः एकः पुत्रः अपि अभवत् । तस्य नाम राहुलः ।

एकदा सिद्धार्थः भ्रमणार्थम् उपवनम् अगच्छत् । तत्र सः एकम् वृद्धम्, एकम् रुग्णम्, एकम् शवम् च अपश्यत् । तेषाम् अवलोकनेन सिद्धार्थः विरक्तः अभवत् । विरक्तः भूत्वा स तपस्यार्थम् वनम् अगच्छत् । तत्र सः ज्ञानम् प्राप्नोत् । ततः देशभ्रमणम् कृत्वा सः सर्वत्र शान्तिसन्देशम् अयच्छत् । सः एव पश्चात् महात्मा गौतमः बुद्धः इति नाम्ना प्रसिद्ध अभवत् ।

क) नृपस्य नाम किम् ?

ख) सिद्धार्थस्य भार्या का आसीत् ?

ग) सिद्धार्थस्य पुत्रस्य नाम किम् ?

घ) सिद्धार्थः भ्रमणार्थं कुत्र अगच्छत् ?

(ङ) सः देशभ्रमणं कृत्वा किम् अकरोत् ?

## लेखनम्

१. स्वस्य पुस्तिकायाम् अधःप्रदत्तान् शब्दान् शुद्धं लिखत ।

दृढनिश्चयः, भगवद्भक्तः, त्यागमूर्तयः , श्रुत्वा, पञ्चवर्षीयः

२. नेपालीभाषायाम् अर्थं लिखत ।

उपदिश्य, अङ्के, जगाम, विमाता, निधाय, कनिष्ठा, भार्या

३. पाठस्य आधारेण पूर्णवाक्येन उत्तरं लिखत ।

(क) कीदृशाः जनाः अमरतां लभन्ते ?

(ख) ध्रुवः बाल्यकालादेव कीदृशः आसीत् ?

(ग) सुरुचिः ध्रुवं प्रति किमवोचत् ?

(घ) ध्रुवस्य वचनं श्रुत्वा सुनीतिः किमवदत् ?

(ङ) ध्रुवः किमर्थं वनमगमत् ?

(च) नारदः ध्रुवं दृष्ट्वा किमवदत् ?

(छ) ध्रुवः कीदृशं वरमलभत ।

४. परस्परं मेलयत ।

| समूह क | समूह ख |
|---|---|
| ध्रुवः | उपदिष्टवान् |
| उत्तमः | वरमदात् |
| नारदः | राजा |
| उत्तानपादः | सुनीतिः |
| भगवान् | सुरुचिः |

५. उचितपदैः रिक्तस्थानं पूरयत।

त्रेतायुगः, सत्ययुगस्य , कलियुगः चत्वारः  द्वापरयुगः

(क) सत्यादयः ............युगाः सन्ति ।

(ख) वर्तमाने ....... प्रचलन् वर्तते।

(ग) उत्तानपादः .......... राजा आसीत् ।

(घ) .........भगवान् श्रीकृष्ण आजायत।

(ङ) द्वितीययुगरूपेण ...........परिचीयते ।

६. अधोनिर्दिष्टान् शब्दान् प्रयुज्य वाक्यानि रचयत ।

वनम् , नारदः, विमातुः, लालयन्, दृष्ट्वा, जगाम,

७. ध्रुवस्य विषये नेपालीभाषायां सारांशं लिखत ।

८. पाठस्य अन्तिमस्य अनुच्छेदस्य श्रुतलेखनं कुरुत ।

९. ध्रुवस्य जीवनमवलोक्य वयं किं शिक्षयामः ? पञ्चभिर्वाक्यैः प्रस्तूयत ।

१०. पाठस्याधारेण घटनाक्रमं मेलयत ।

राज्ञः द्वे भार्ये आस्ताम् । सुरुचिः कनिष्ठा भार्या आसीत् । सत्ययुगे उत्तानपादकनामकः कश्चिद्राजा आसीत् । तयोर्मध्ये सुनीतिः ज्येष्ठा भार्या आसीत् । सुनीतेः पुत्रत्वेन ध्रुवः अजायत । तौ बालौ प्रतिदिनं वर्धमानौ आस्ताम् । सुरुचेः पुत्रत्वेन उत्तमः अजायत ।

## रचनात्मकः अभ्यासः

१. बोधः

केचन धातवः उभयपदसंज्ञकाः भवन्ति । परस्मैपदसंज्ञकाः आत्मनेपदसंज्ञकाश्च । अत्र च वयम् आत्मनेपदसंज्ञकानां धातूनां प्रक्रियाः जानीमः ।

लट्लकारस्य संक्षिप्त-धातुरूपावली

| एकवचनम् | द्विवचनम् | बहुवचनम् | |
|---|---|---|---|
| अते | एते | अन्ते | प्रथमपुरुषः |
| असे | एथे | अध्वे | मध्यमपुरुषः |
| ए | आवहे | आमहे | उत्तमपुरुषः |

उदाहरणम्

लभ्-धातुरूपावली

| एकवचनम् | द्विवचनम् | बहुवचनम् | |
|---|---|---|---|
| लभते | लभेते | लभन्ते | प्रथमपुरुषः |
| लभसे | लभेथे | लभध्वे | मध्यमपुरुषः |
| लभे | लभावहे | लभामहे | उत्तमपुरुषः |

२. उपरि निर्दिष्टां रूपावलीं विलोक्य अधः प्रदत्तानां धातूनां रूपावलीं रचयत ।

(क) यत् (ख) यज्

(ग) भाष् (घ) भज्

(ङ) वृध् (च) सेव्

३. कोष्ठकस्य सङ्केतानुसारेण रिक्तस्थानं पूरयत ।

(क) भृत्याः स्वामिनं.........। (सेव्)

(ख) धार्मिकाः ईश्वरं...........। (भज्)

(ग) परिश्रमी सफलतायै.......। (यत्)

(घ) रामलालः बहु...............। (भाष्)

(ङ) काष्ठमण्डपनगरे बहुनि मन्दिराणि .....। (वृत्)

४. निर्दिष्टानां पदानां साहाय्येन पञ्चभिर्वाक्यैः चित्रं वर्णयत ।

चित्रम्
(एउटा बगैँचा, पाकेको आँपको रूखतिर हेरिरहेको बालक , रूखमा बसेर आँप खाइरहेको बाँदर )

उद्यानम् , बालकः, आम्रवृक्षः, पक्वानि आम्रफलानि, वानरः

## व्याकरणानुशीलनम्

१. बोधः

आत्मनेपदिनः धातोः शानच्-प्रत्ययो भवति । वर्तमानकालस्य अपूर्णपक्षे शानच्-प्रत्ययस्य प्रयोगो भवति । सामान्यरूपेण शानच्-प्रत्यये सति 'ते' इत्यस्य स्थाने 'मान' इति भवति ।

यथा-

एधते= एधमानः,

रमते= रममाणः

दीप्यते= दीप्यमानः

यतते= यतमानः

२. उदाहरणानुसारेण रिक्तस्थानं पूरयत ।

भज्+शानच् = भजमानः

सेव्+शानच् =

भाष्+शानच् =

वृत्+शानच् =

वृध्+शानच् =

लभ्+शानच् =

मुद्+शानच् =

शुभ्+शानच् =

अय्+शानच् =

ध्वंस्+शानच् =

इज्+शानच् =

## श्रवणपाठः

मानवस्यजीवने अनुशासनस्य अत्यधिकं महत्त्वम् अस्ति। स्वयम् एव नियमे अवस्थानम् अनुशासनमस्ति । अतः नियमपालनम् एव अनुशासनम् अस्ति । विशेषेण विद्यार्थिभ्यः अनुशासनम् आवश्यकम् भवति । अनुशासनम् विना ज्ञानम् न भवति । यः अनुशासनं पालयति सः सर्वेषाम् प्रियः भवति । सर्वे जनाः तं प्रशंसन्ति । अध्ययने अपि अनुशासनस्य महत्त्वम् अस्ति । समाजे, सर्वकारक्षेत्रे, क्रीडाक्षेत्रे, स्वस्यपरिवारे च अस्य अतीव महत्त्म् अस्ति । मान्यजनस्य, शिक्षकस्य, शिक्षिकायाश्च आज्ञापालनम् अपि अनुशासनम् अस्ति । अनुशासनम् विना अव्यवस्था भवति । अतः समाजस्य देशस्य च उत्थानाय अपि अनुशासनम् आवश्यकम् भवति । .

अष्टमः
पाठ

# वृद्धजनकप्रक्षेपणपात्रम्

नेपालस्य दुर्गमे ग्रामे एकः वृद्धः वसति स्म । तस्य एकः पुत्रः आसीत् । वृद्धः पुत्रस्य जातकर्मादि-विवाहपर्यन्तानि कर्माणि सम्पादयामास । विवाहानन्तरम् पुत्रस्यापि पुत्रः अजायत । इदानी गृहे वृद्धः, पुत्रः, पुत्रवधूः, प्रपौत्रश्च आसन् । वृद्धः शनैः अशक्तः सञ्जातः । सः सहयोगं विना आहारं विहारं च कर्तुं न शक्नोति स्म । सः शौचालयपर्यन्तं गन्तुम् अपि असमर्थः अभवत् । सः शय्यायामेव शयनं भोजनं मलमूत्रयोरुत्सर्जनं च करोति स्म ।

आरम्भकाले तु पुत्रपुत्रवधूभ्यां तस्य सेवा विहिता । किन्तु पश्चात् सेवाविमुखाः सञ्जाताः । पुत्रस्य मनसि दुर्बुद्धिः उत्पन्ना । सः चिन्तयामास- एषः वृद्धः खादति एव, आहारविहारौ च कर्तुं न शक्नोति । मलस्य मूलस्य च व्यवस्था अस्माभिः कर्तव्या । इतः कियत्कालपर्यन्तं जीवति । कालोऽपि न आयाति । अहम् किं कुर्याम् ? गिरिशिखरात् नीचैः पातयेयम् ? ततः वयम् अपि आनन्दपूर्वकं जीवितुं शक्नुमः । वृद्धस्यापि स्वर्गस्य द्वारम् उद्घाटितं भवति ।

सः स्वपत्न्या सह विमर्शम् अकरोत् । पत्नी अपि श्वसुरस्य सेवायाः मुक्तिमिच्छति स्म । सा सहर्षं स्वीचकार । अतः पत्युरुपायं समर्थयामास । अपरेद्युः सः पितरम् वंशादिनिर्मितपात्रे संस्थाप्य गिरिशिखरात् प्रक्षेपणोद्देश्यपूर्वकं गृहात् प्रस्थितवान् । तस्य पुत्रः अपि तम् अन्वगच्छत् । गिरिशिखरः दूरे न आसीत् । वृद्धः स्पष्टतया द्रष्टुं श्रोतुं च न शक्नोति स्म । पुत्रः कुत्र नयतीति सः न जानाति स्म । पुत्रः भगवतः दर्शनाय मन्दिरं नयतीति स विचारयामास । अतः सः किमपि न उक्तवान् । गिरिशिखरः सम्प्राप्तः । पर्वतशिखरात् वृद्धस्य प्रक्षेपणावसरे एव प्रपौत्रः पुत्रं कथयामास- जनक ! पात्रं तु न प्रक्षिपतु ।

पुत्रः कथयामास- किं कथयसि ? किमर्थम् ?

प्रपौत्रः कथयामास- अधुना भवान् पात्रमपि प्रक्षिपति चेत् पश्चात् अहं भवन्तं कुत्र संस्थाप्य प्रक्षिपानि ?

पुत्रस्य वचनं श्रुत्वा सः विस्मितमनाः अपृच्छत्- कं प्रक्षिपसि ?

प्रपौत्रः उत्तरं ददौ- भवान् भवतः पितरम्, अहम् भवन्तम् ।

पुत्रस्य वचनं श्रुत्वा सः सुप्तोत्थित इव सञ्जातः । तस्य दुर्बुद्धिः पलायिता । सः ससम्मानं पितरं गृहम् आनयत् । तस्य सेवां चकार ।

## बाबु फाल्ने डोको

नेपालको दुर्गम गाउँमा एक जना बुढा बस्थे । उनको एउटा छोरो थियो । उनले छोराका न्वारनदेखि विवाहसम्मका सबै कृत्यहरू सम्पन्न गरिदिएका थिए । छोराको विवाहपछि उसको पनि एउटा छोरो जन्मिएको थियो । अहिले घरमा बुढा, छोरा, बुहारी र नाति थिए । बुढा विस्तारै अशक्त भए । सहायताविना उनी हिँडडुल गर्न सक्दैनथे । उनी चर्पीमा जानसम्म नसक्ने भए । उनी ओछ्यानमै सुत्ने, खाने र दिसापिसाब गर्ने अवस्थामा पुगे ।

सुरुसुरुमा त छोराबुहारीले उनको हेरचाह गरे । पछि सेवाबाट दिक्क भए । छोराको मनमा कुविचार आयो । उसले सोच्यो- यो बुढो खान्छ मात्र, हिँडडुल गर्न पनि सक्दैन । गुहुमुत पनि हामीले सोहोर्नुपर्छ । अब अझै कति बाँच्ने हो । काल पनि आउँदैन । म के गरूँ ? कि भीरबाट तल खसालिदिऊँ ? त्यसपछि हामी सुखसँग बाँच्न पाउँछौं । बुढालाई पनि स्वर्गको बाटो खुल्छ ।

उसले श्रीमतीसँग सल्लाह गऱ्यो । श्रीमती पनि ससुराको रेखदेखबाट छुटकारा पाउन चाहन्थी । उसले खुसीसाथ स्विकारी । उसले श्रीमान्को उपायमा सही थापी । अर्को दिन छोरो बुबालाई डोकामा राखेर पहाडबाट खसाल्ने उद्देश्यले घरबाट हिँड्यो । उसको छोरो पनि पछिपछि लाग्यो । भीर त्यति टाढा थिएन । बुढा राम्रोसँग देख्न र सुन्न सक्दैनथे । छोराले कहाँ लैजान लागेको उनलाई थाहा थिएन । छोराले मन्दिरमा भगवान्को दर्शन गराउन लैजाँदैछ भन्ने सोचेर उनी चुप लागे । भीर आइपुग्यो । भीरबाट बुबालाई खसाल्नै लागेका बेलामा नातिले भन्यो- बुबा ! डोको चाहिँ नफाल्नुस् ल ।

छोराले छक्क हुँदै सोध्यो- यो के भन्छ ? किन ?

नातिले भन्यो- तपाईँले अहिले डोको पनि फाल्नुभयो भने, पछि म तपाईँलाई केमा हालेर फालूँ ?

छोराको कुरा सुनेर जिल्ल पर्दै उसले सोध्यो- कसलाई फाल्छस् ?

नातिले भन्यो- तपाईँले बुबालाई, मैले तपाईँलाई ।

छोराको कुरा सुनेर ऊ निद्राबाट बिउँझेजस्तो भयो । उसको कुविचार भाग्यो । उसले सम्मानपूर्वक बुबालाई घरमा ल्यायो । बुबाको सेवा गऱ्यो ।

## भस्मनः रज्जुः

कुत्रचित् ग्रामे एकं गृहमासीत् । तत्र पितापुत्रौ एव आस्ताम् । पितुर्नाम आङ्दावा, पुत्रस्य नाम च आङ्फुर्वा आसीत् । तौ निर्धनौ आस्ताम् । गृहम् एव तयोः सम्पत्तिः आसीत् । कर्म कृत्वा तौ जीवनं निर्वहतः । तत्र एका कुप्रथा आसीत् । वृद्धजनानां महारण्ये परित्यागः तत्रत्या परम्परा आसीत् । संविधानेऽपि सा व्यवस्था आसीत् । आहारविहारादिषु असमर्थान् तान् वन्यजन्तवः खादन्ति स्म । भोजनाभावे वा तेषां मरणं भवति स्म । समाजे वृद्धानाम् औचित्यं नास्ति । ते कार्यं कर्तुं न शक्नुवन्ति । इति पूर्वतनः विचारः भवेत् । इदानी यावत् सा व्यवस्था विगता नासीत् ।

कालान्तरे आङ्दावा वृद्धतां गतः । सः कार्यं कर्तुम् असमर्थः अभूत् । आङ्फुर्वा पितरं महारण्ये त्यक्तुं न इच्छति स्म । परन्तु परम्पराधीनः सः संविधानमपि उल्लङ्घयितुं न शक्नोति स्म । भग्नहृदयः सः संविधानस्य परम्परायाश्च भीत्या स्वपितरम् ऊढ्वा महारण्यं प्रति प्रस्थितवान् । सुदूरयात्रायाः पश्चात् सः पितरं वनमध्ये स्थापयामास । तत्र एकम् सरोऽपि आसीत् । शीतातपवारणाय सामान्या व्यवस्था अपि तेन कारिता । आनीतम् अन्नपानादिकम् अपि पित्रे समर्प्य र गृहं गन्तुकामः सः उक्तवान्- अत्रैव वसतु भवान् । इदानीम् अहम् गच्छामि । इयमेव अत्रत्या प्रथा । तदानी तस्य नेत्रौ अश्रुपूरितौ आस्ताम् । आङ्दावा अपि अवाक् आसीत् । सोऽपि अश्रुहीनौ नेत्रौ पस्पर्श । पितापुत्रयोः वियुक्तिः दुष्करा आसीत् । आङ्फुर्वा पश्यन् आङ्दावा अवदत्- गच्छ, गच्छ । शीघ्रमेव रात्रिरागमिष्यति, त्वं पथविचलितः भविष्यसि इति सञ्चिन्त्य मार्गेषु मया किसलयाः प्रक्षिप्ताः सन्ति । मार्गस्थान् किसलयान् दृष्ट्वा गच्छतु, मार्गभ्रष्टो न भविष्यसि । शीघ्रमेव ग्रामं प्राप्नोषि । आङ्फुर्वा पितुः तथाविधे युक्तिविषये तावत् अनभिज्ञः एव आसीत् । आगमनकाले पिता वृक्षकिसलयान् विचिनोति स्म । किमर्थं करोतीति सः न जानाति स्म । तदानीम् आङ्फुर्वा किंकर्तव्यविमूढः सञ्जातः । पितरः प्रगाढं स्नेहम् अनुभूय तस्य प्रत्यागच्छन्तौ पादौ एव न चलितौ । सः आत्मानं धिक्कृतवान् । देशस्य एतादृशी व्यवस्थाम् प्रत्यपि क्रुद्धः सञ्जातः । तस्मिन् महारण्ये अशक्तं पितरमेव त्यक्त्वा गन्तुमेन न अशकत् ।

गृहे एव गोपयित्वा पितरं पालयामि इति सः विचारितवान् । पुनः पितरम् ऊढ्वा सः गृहं प्रत्यागच्छत् । केचन दिवसाः व्यतीताः । तस्मिन् समय भस्मनः रज्जुनिर्माणे यः दक्षः तस्मै बहु धनं दास्यामि, राजकुमार्याः विवाहम् अपि कारयिष्यामि इति राजा उद्घोषितवान् । राजा प्रजानां युक्तिमत्तां विज्ञातुमिच्छति स्म । कर्मकराः राज्ञः घोषणां श्रावयितुं ग्रामे ग्रामे अगच्छन् । राज्ञः उद्घोषम् आङ्फुर्वा अपि अशृणोत् । सः सर्वं वृत्तान्तं पितरम् अश्रावययत् । सः अविवाहितः एव आसीत्, अतः तस्मै अयं अवसरः महत्त्वपूर्णः आसीत् । आङ्दावा स्वपुत्रं भस्मनः रज्जुनिर्माणस्य उपायम् अकथयत् । पितुराज्ञानुसारेण काष्ठफलकस्य द्वयोः प्रान्तयोः कीलकेन विद्ध्वा रज्जुबन्धनं कृतवान् । समीचीनतया अग्निना रज्जुदहनं कृतवान् । रज्जुः दग्धा । सः काष्ठफलकं चालनं विना राज्ञः समक्षं प्रस्तुतवान् । राजा हर्षितः किन्तु प्रतिज्ञोचितं पारितोषिकं न ददौ ।

राजा सप्तदिवसाभ्यन्तरे समाधानाय अन्यां समस्यां प्रस्तुतवान् । सः द्वयोरेव प्रान्तयोः समपरिधिभूतं काष्ठदण्डम् प्रददौ । अथ उवाच- एतस्य कतमः भागः अग्रः कश्च पश्चः इति समस्या अस्ति । यदि भवान् न परिचिनोति चेत् दण्डभाग् भविष्यति, राजा उवाच । आङ्फुर्वा दिवसवृत्तान्तं सविस्तारं पितरं श्रावयामास । सः चिन्ताकुलः आसीत् । एतस्य समाधानं भविष्यति, निश्चिन्तः स्वपिहि । पिता पुत्रं अचकथत् । आङ्फुर्वा प्रातः झटिति उदतिष्ठत् । तस्य मुखं मलिनम् आसीत् । राज्ञः आदेशस्योल्लङ्घने जीवनम् एव समाप्स्यते इति सः विचारितवान् । सः पितरम् उपायम् अपृच्छत् । रज्ज्वा दण्डस्य मध्यभागं बध्नातु । ततः रज्जुं गृहीत्वा दण्डं सरोवरे शनैः पातयतु । यः भागः प्रथमं जलं स्पृशति सः पश्चः । यः पश्चात् स्पृशति सः अग्रः इति । आङ्दावा कथयामास । आङ्दावा तथैव कृतवान् यथा पिता उक्तवान् । राज्ञः समक्षं दण्डस्य अग्रभागं पश्चभागं च प्रस्तुतवान् । युक्तिसङ्गतं तर्कं श्रुत्वा अधुनापि राजा प्रफुल्लचित्तः अभूत् परन्तु प्रतिज्ञानुसारि पारितोषिकं न अदात् ।

राजा पुनः अन्यां समस्यां प्रस्तुतवान् । वादनेन तु वाद्यानि नदन्त्येव । किन्तु तत् किं वाद्यम् यद् वादनेन विना नदति । त्रिमासाभ्यन्तरे तादृशं वाद्यम् उपस्थापयतु । राजा आज्ञां ददौ । आङ्फुर्वा क्लाक्तः अभवत् । सः सर्वम् इतिवृत्तं स्वजनकम् अश्रावयत् । इदमपि कार्यं सरलतया समाप्यते इति पिता आश्वासयामास । प्राप्तानि कर्माणि बुद्ध्या सम्पादनीयानि, मनुष्यस्य सार्थकता तत्रैव भवति इति आङ्दावा सदैव वदति स्म । विनावादनं यद् वाद्यं नदति, तन्निर्माणोपायमपि पिता उक्तवान् । सः मध्यभागे मृदङ्गसदृशं काष्ठम् एकम् आनिनाय । तच्च गोधिकायाः पारदर्शिन्या त्वचा वेष्टितवान् । तत्र मधुमक्षिकाः

पालयामास । ततः मधुमक्षिकाः बहिर्गन्तुं न शक्नुवन्ति स्म, किन्तु स्वल्पछिद्रवशात् जीवितुं शक्नुवन्ति स्म । गोधिकायाः पारदर्शिन्यां त्वचि मधुमक्षिकाणां स्पर्शात्, तेषां स्वराच्च सुमधुरं सङ्गीतम् उत्पद्यते स्म । आङ्फुर्वा त्रिमासाभ्यन्तरे एव सावधानं तद् वाद्ययन्त्रं राज्ञः हस्तयोः समर्पितवान् । राजा यदा वाद्ययन्त्रं गृहीतवान्, वाद्ययन्त्रस्य चालनेन, तत्रत्याः मधुमक्षिकाः इतस्ततः चलिताः । मधुमक्षिकाणां स्वरेण तासां गोधिकात्वचःस्पर्शनेन च मधुरं सङ्गीतं समुत्पन्नम् । तस्य एतत्कर्मणा राजा प्रभावितः अभूत् । परन्तु आङ्दावा एव एतानि कार्याणि अकरोत् इति राजा नैव विश्वसितवान् । राजा याथातथ्यं ज्ञातुम् उत्सुकः अभवत् ।

आङ्फुर्वा व्यामोहे पतितः । सः किंकर्तव्यविमूढोऽभूत् । सत्यकथने संविधानस्य उल्लङ्घनरहस्यं समुद्घाटितं भवति स्म । तथा च तस्य पितापुत्रौ एव दण्डभाजौ भवतः स्म । राज्ञः समीपे असत्यकथने तस्य सामर्थ्यमेव नासीत् । याथातथ्यम् अपि न प्रकाशयामि, पारितोषिकम् अपि नेच्छामि इति विचार्य सः राजानं कथयामास । राजा तस्य विचारं न स्वीचकार । उपायहीनः सः सर्वं वृत्तान्तं राजानम् अकथयत् । आत्मानं पितरं च दण्डस्य व्यवस्था न भवेत् इति च सविनयम् अयाचत । तस्य कथनं श्रुत्वा राजा विस्मयान्वितः सञ्जातः ।

अशक्तानां वृद्धानां वने परित्यागः कर्तव्यः इति व्यवस्था कुतः सञ्चाल्यमाना अस्ति इति राजा न जानाति स्म । राजा मन्त्रिणं समाहूय अपृच्छत् । परापूर्वकालस्य संविधानस्य व्यवस्थाकारणात् अद्यत्वेऽपि सा प्रथा सञ्चाल्यमाना अस्तीति मन्त्री कथयामास ।

इतः परं अशक्तान् वृद्धजनान् गृहान्निष्काशनं न कुर्वन्तु । तेषामनुभवः भाविसन्ततीनां कृते महत्त्वपूर्णं भवति । तेषामुपदेशं स्वीकुर्वन्तु । वृद्धानां सेवाकरणेन देवताः अपि प्रसन्नाः भवन्ति । एतस्य घोषणां कुर्वन्तु । ग्रामे ग्रामे अस्य प्रचारं कुर्वन्तु । राजा मन्त्रिणं सचिवान् च आदिदेश । ते च सर्वत्र ग्रामेषु तस्य प्रचारम् अकुर्वन् ।

पूर्वप्रतिज्ञानुसारं आङ्फुर्वा अपि राजकुमार्या सह विवाहम् अकरोत् । आङ्दावा अपि परामर्शकाररूपेण राजप्रासादे नियुक्तः । ततः प्रभृति आङ्दावा आङ्फुर्वा राजप्रासादे सुखपूर्वकं स्थातुम् आरभेताम् ।

# खरानीको डोरी

कुनै गाउँमा एउटा घर थियो । त्यहाँ बुबा र छोरा थिए । बुबाको नाम आङ्दावा र छोराको नाम आङफुर्वा थियो । उनीहरू गरिब थिए । उनीहरूको सम्पत्ति घरमात्र थियो । काम गरेर उनीहरू जीविका चलाउँथे । त्यहाँ एउटा कुरीति थियो । बुढा मानिसहरूलाई वनमा छोड्ने त्यहाँको परम्परा थियो । कानूनमा पनि त्यसको व्यवस्था थियो । हिँडडुल गर्न नसक्ने उनीहरूलाई वन्यजन्तुहरूले खान्थे । कि त भोकभोकै उनीहरू मर्थे । समाजमा बुढापाकाको प्रयोजन छैन । उनीहरू काम गर्न सक्दैनन् । यस्तो पहिलेको विचार हुँदो हो । अहिलेसम्म पनि त्यो व्यवस्था गएको थिएन ।

समय बित्दै जाँदा आङ्दावा पनि बुढो भयो । ऊ काम गर्न सक्दैनथ्यो । आङ्फुर्वा बुबालाई घनाजङ्गलमा छोड्न चाहँदैनथ्यो । परम्परा र कानूनलाई पनि नमान्न सक्दैनथ्यो । मन चुँडाएर संविधान र परम्पराको डरले बुबालाई बुइमा बोकेर ऊ घनाजङ्गलतर्फ लाग्यो । लामो यात्रापछि उसले वनको बिचमा बुबालाई बिसायो । त्यहाँ एउटा तलाउ पनि थियो । घामपानी छेल्नलाई उसले सामान्य व्यवस्था पनि मिलाइदियो । ल्याएको सामलतुमल बुबालाई दिएर घर जान खोज्दै उसले भन्यो- हजुर यहीँ बस्नुहोस् । अहिले म जान्छु । यहाँको चलन यस्तै छ । त्यतिखेर उसको गह आँसुले भरियो । आङ्दावा पनि केही बोल्न सकिरहेको थिएन । उसले पनि आँसु ओभाइसकेका आँखाहरू पुछ्यो । बाबुछोरा छुट्टिनु सजिलो थिएन । आङ्फुर्वालाई हेर्दै आङ्दावाले भन्यो- जा, जा । चाँडै रात पर्छ र तैंले बाटो भुल्लास् भनेर बाटोमा पालुवाहरू चुँडेर मिल्काएको छु । बाटोका पालुवाहरूलाई हेर्दै जा, बाटो भुल्दैनस् । चाँडै गाउँमा पुग्छस् । आङ्फुर्वालाई बुबाको यस्तो जुक्तिबारे अहिलेसम्म थाहा थिएन । आउँदा बुबाले पालुवाहरू चुँड्दै हुनुहुन्थ्यो तर किन भन्ने उसलाई थाहा थिएन । त्यसपछि आङ्फुर्वा के गरूँ के गरूँ भनेर दोधारमा पर्‍यो । बुबाको अगाध माया देखेर उचालिसकेका उसका पाइला चलेनन् । उसले आफूलाई धिक्कार्‍यो । देशको यस्तो कानूनसँग पनि उसलाई रिस उठ्यो । त्यस्तो घना जङ्गलमा बुबालाई एक्लै छोडेर जानै सकेन ।

उसले घरमै लुकाएर बुबालाई पाल्ने निधो गर्‍यो । फेरि बुबालाई बोकेर ऊ घर फर्कियो । केही दिनहरू बिते । राजाले खरानीको डोरी बनाउने व्यक्तिलाई राज्यबाट धेरै धनदौलत दिएर राजकुमारीसँग विवाह गरिदिने घोषणा गरे । राजा आफ्ना प्रजाहरू कति बुद्धिमानी

छन् भनेर जान्न चाहन्थे । राजाका कर्मचारीहरूले राजाको घोषणा गाउँगाउँमा सुनाए । आङ्फुर्वाले पनि यो खबर सुन्यो । उसले सबै कुरा बुबालाई सुनायो । ऊ पनि अविवाहित थियो, त्यसैले यो महत्त्वपूर्ण मौका थियो । आङ्दावाले छोरालाई खरानीको डोरी बनाउने उपाय सिकायो । बुबाको आज्ञाअनुसार काठको फल्याकको दुई छेउमा काँटी ठोकेर डोरी बाँध्यो । राम्ररी आगोले डढायो । डोरी डढ्यो । उसले त्यो काठको फल्याकलाई नचलाईकन राजासमक्ष प्रस्तुत गर्‍यो । राजा खुसी भए तर उनले भनेबमोजिम पुरस्कार दिएनन् ।

राजाले सात दिनभित्र समाधान गर्ने गरी अर्को समस्या देखाए । उनले दुवै छेउतिर बराबर गोलाइ भएको लौरो दिएर त्यसको टुप्पो र फेद पत्ता लगाउन लगाए । पत्ता नलगाए दण्ड दिने कुरा पनि सुनाए । आङ्फुर्वाले दिनभरि भएको सबै कहानी बुबालाई सुनायो । ऊ दुःखी थियो । यसको समाधान हुन्छ, ढुक्क भएर सुत् । बुबाले छोरालाई भन्नुभयो । आङ्फुर्वा बिहान सबेरै उठ्यो । उसको मुख मलिन थियो । उसले राजाको आज्ञा नमाने ज्यानै जान्छ भन्ने ठान्यो । उसले बुबालाई उपाय सोध्यो । डोरीले लौरोको बिचमा बाँध् । त्यसपछि त्यो डोरीलाई समाएर बिस्तारै लौरोलाई तलाउमा डुबा । जुन भागले पहिले छुन्छ त्यो फेद हो र जुन भागले पछि छुन्छ त्यो टुप्पो हो । उसलाई बुबाले उपाय बताउनुभयो । आङ्फुर्वाले पनि बाबुले भनेजस्तै गर्‍यो । उसले राजाका अगाडि लौराको फेद र टुप्पो पनि प्रस्तुत गर्‍यो । युक्तिसङ्गत तर्क सुनेर अहिले पनि राजा खुसी भए तर आफ्नो वाचाअनुसार पुरस्कार भने दिएनन् ।

राजाले त अर्को समस्या पो देखाए । बजाउँदा त सबै बाजाहरू बज्छन् । तर कुन त्यस्तो बाजा छ, जो नबजाई बज्छ । तीन महिनाभित्र त्यस्तो बाजा ल्याऊ । राजाले अज्ञा दिए । आङ्फुर्वा थाक्यो । उसलाई दिक्क पनि लाग्यो । उसले सबै कुरा बुबालाई सुनायो । यो काम पनि सजिलै सकिनेछ भनेर बुबाले आश्वस्त बनाउनुभयो । आएका कामहरू बुद्धिपूर्वक पूरा गर्नुपर्छ । मानिस हुनुको सार्थकता त्यसैमा छ भनेर आङ्दावा भनिरहन्थ्यो । नबजाइकन बज्ने बाजा बनाउने उपाय पनि बुबाले सिकाइदिनुभयो । उसले मादलजस्तो बिचमा खाली भएको काठ ल्यायो । त्यसलाई गोहोरोको पातलो छालाले मोर्‍यो । त्यसमा माहुरी पाल्यो । त्यसबाट माहुरीहरू बाहिर निस्कन सक्दैनथे तर सानासाना प्वालका कारणले गर्दा जीवित नै रहन्थे । त्यो पातलो छालामा माहुरीहरूले छुँदा र तिनीहरू भुनभुनाउँदा मधुर सङ्गीत निस्कन्थ्यो । आङ्फुर्वाले त्यो बाजा तीन महिनाभित्रै राजालाई

बुझायो । राजाले जब त्यो बाजा लिए बाजा हल्लिनाले माहुरीहरू यताउता चलमलाए । माहुरीहरूको भुनुभुनु र उनीहरूले छालामा छुँदा निस्केको आवाजले सुललित सङ्गीत निस्कियो । आङ्फुर्वाको कामबाट राजा प्रसन्न भए । तर उसले नै यी सबै काम गरेकोमा राजाले विश्वास गरेनन् । उनले यथार्थ जान्न चाहे ।

आङ्फुर्वा फेरि असमञ्जसमा पर्‍यो । उसलाई के गर्नु के नगर्नु भयो । सत्य बोल्दा कानून नमानेको तथ्य बाहिरिन्थ्यो । त्यसो हुँदा बाबुछोरा दुवैलाई सजाय हुन्थ्यो । राजाको छेउमा असत्य बोल्ने हिम्मत उसमा थिएन । सत्य पनि बोल्दिनँ, मलाई पुरस्कार पनि चाहिँदैन भनेर उसले राजालाई भन्यो । उसको कुरा राजाले मानेन । उसले उपायहीन भएर सबै कुरा राजालाई बतायो । आफूलाई र बुबालाई सजाय नदिन अनुरोध पनि गर्‍यो । उसको कुरा सुनेर राजा एकछिन त जिल्ल परे ।

अशक्त बुढाबुढीलाई बनमा छोड्नुपर्ने नियम कहिलेदेखि चलेको हो राजालाई थाहा थिएन । उनले मन्त्रीलाई बोलाएर सोधे । धेरै पहिलेदेखि कानूनमा उल्लेख भएका कारण अहिलेसम्म त्यस्तो चलन चलेको कुरा मन्त्रीले राजालाई बताए ।

अबदेखि अशक्त वृद्ध व्यक्तिलाई घरबाट ननिकाल्न" । उनीहरूको अनुभव भावी पुस्तालाई काम लाग्ने हुन्छ । उनीहरूका अर्ती उपदेशहरू मान्न" । वृद्धवृद्धाको सेवा गर्दा देवता पनि प्रसन्न हुन्छन् । सबैतिर यो घोषणा गरिदिन" । गाउँगाउँमा प्रचारप्रसार गर्न" । राजाले मन्त्री र सचिवहरूलाई आदेश दिए । उनीहरूले पनि गाउँभरि प्रचारप्रसार गरे ।

पहिलेको घोषणाअनुसार आङ्फुर्वाको विवाह राजकुमारीसँग भयो । आङ्दावालाई पनि सल्लाहकारका रूपमा राजभवनमा नियुक्ति गरियो । त्यसपछि आङ्दावा र आङ्फुर्वा सुखपूर्वक दिन बिताउन थाले ।

## शब्दार्थाः

| शब्दः | संस्कृते पर्या | नेपाल्यामर्थः | आङ्गलभाषायामर्थः |
|---|---|---|---|
| निर्वहतः | जीविकोपार्जनं कुरुतः | निर्वाह गर्थे | |
| प्रथा | परम्परा | चलन | |
| औचित्यम् | उपयुक्तता | उपयोगिता | |

| | | | |
|---|---|---|---|
| व्यवस्था | शास्त्रमर्यादा | नियम, कानून | |
| महारण्यम् | अरण्यानी | घना जङ्गल | |
| भग्नहृदयः | खिन्नमनाः | दुःखी | |
| पथविचलितः | मार्गभ्रष्टः | बाटो भुलेको | |
| किसलयः | पल्लवः | पालुवा | |
| काष्ठफलकम् | | काठको फल्याक | |
| भस्म | विभूतिः | खरानी | |
| रज्जुः | स्रक् | डोरी | |
| पारितोषिकम् | | पुरस्कार | |
| समानपरिधिभूतं | समवृत्तं | बराबर गोलाइ भएको | |
| गोपयित्वा | रक्षयित्वा | लुकाएर | |
| स्वपिहि | शेष्व | सुत् | |
| उपायः | युक्तिः | उपाय | |
| वाद्यम् | वादित्रम् | बाजा | |
| मधुमक्षिका | सरघा | माहुरी | |
| गोधिका | गोधा | गोहोरो | |
| याथातथ्यम् | यथार्थम् | साँचो कुरा | |
| संविधानः | विधिः | कानून | |
| परामर्शदाता | विमर्शदाता | सल्लाहकार | |
| ततः प्रभृति | तत्पश्चात् | त्यहाँ देखि | |
| राजप्रासादः | राजभवनम् | राजदरबार | |
| मृदङ्गः | वाद्यविशेषः | मादल | |
| सावधानः | सचेष्टः | सजगतापूर्वक | |

## अभ्यासः

### श्रवणं भाषणं च

१. कथायाः अनुच्छेदान् एकैकशः उच्चारयत । एकस्य उच्चारणम् अन्ये शृणुत ।

२. शिक्षकस्य साहाय्येन अधस्तनानि पदानि श्रुत्वा शुद्धम् उच्चारयत

किंकर्तव्यविमूढः, रज्जुः, महारण्ये, औचित्यम्, शक्नुवन्ति, अश्रुपूरितौ, आङ्फुर्वा, वृक्षकिसलयान्, प्रतिज्ञोचितम्, विद्ध्वा, पारितोषिकम्, निर्माणोपायम् ।

३. चित्रं दृष्ट्वा वर्णयत

सहरको बस्ती । बीचमा कालोपत्रे गरिएको सडक । जेब्राक्रसबाट एउटी लौरो टेकिरहेकी हजुरआमालाई बाटो काट्न सहयोग गरिरहेको बालक । सडकको एउटा कुनामा बुढो माग्ने मान्छे, जो सडकका यात्रुहरूलाई केही कुरा मागिरहेको देखिन्छ ।

४. पाठस्य कथां स्वमातृभाषायां कक्षायां श्रावयत ।

५. पाठस्य द्वितीयम् अनुच्छेदं शिक्षकस्य मुखात् शृणुत, अर्थं च विचारयत ।

६. पाठस्य प्रथमम् अनुच्छेदं श्रुत्वा एकवाक्येन उत्तरयत

(क) गृहे कौ आस्ताम् ?

(ख) तत्रत्या परम्परा का आसीत् ?

(ग) पुरातनः विचारः कः आसीत् ?

(घ) पितापुत्रयोः सम्पत्तिः आसीत् न वा ?

(ङ) तौ कथं जीवनं निर्वहतः ?

७. अनुच्छेदं श्रुत्वा उत्तरं वदत

मार्गस्य समीपे वटवृक्षः आसीत् । तत्र हंसकाकौ निवसतः । ग्रीष्मसमये तत्र कश्चित् पथिकः समागतः । सः परिश्रान्तः आसीत् । सः वृक्षतले धनुष्काण्डं संनिधाय सुप्तः । किञ्चित् कालानन्तरं तस्य मुखात् वृक्षच्छाया अपगता । ततः सूर्यतेजसा तस्य मुखं व्याप्तं जातम् । तद् दृष्ट्वा राजहंसेन कृपया पक्षौ प्रसार्य पुनः तस्य मुखे छाया कृता । ततः पथिकः सुखपूर्वकं निद्रितवान् । तत्पश्चात् परसुखम्

असहिष्णुः स्वभावदुर्जनः काकः तस्य मुखे पुरीषोत्सर्गं कृत्वा पलायितवान् । यदा पथिकः उत्थाय उर्ध्वं पश्यति तदा सः राजहंसम् अपश्यत् । सः तं हतवान् । अत एव उच्यते-

त्यज दुर्जनसंसर्गम्, भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रम्, स्मर नित्यमनित्यताम् ॥

(क) वृक्षे कः वसति ?

(ख) राजहंसः कीदृशः आसीत् ?

(ग) काकः किं कृतवान् ?

(घ) पथिकः उपरि किम् अपश्यत् ?

(ङ) जनः किं कुर्यात् ?

बाटोको छेउमा एउटा वरको रुख थियो । त्यहाँ हाँस र काग बस्थे । त्यहाँ गर्मीको समयमा कुनै बटुवा आइपुग्यो । ऊ थाकेको थियो । ऊ रुखको फेदमा धनु र बाण राखेर सुत्यो । केही समयपछि उसको मुखबाट रुखको शीतलता हरायो । सूर्यको किरणले उसको मुख छोप्यो । त्यसपछि राजहंसले दया गरेर आफ्नो पखेटा फिँजाएर उसलाई छाया दियो । बटुवा आनन्दले निदायो । त्यही बेला अर्काको सुख देखी नसहने कागले त्यसको मुखमा विष्ट्याइदियो र भाग्यो । जब बटुवा उठेर माथि हेर्‍यो, उसले हाँसलाई देख्यो र मार्‍यो । त्यसैले भनिन्छ-

***दुर्जनको सङ्गत गर्नुहुँदैन । सज्जनको सङ्गत गर्नुपर्छ । सधैँ परोपकार गर्नुपर्छ । संसारको क्षणिकतालाई सधैँ सम्झिनुपर्छ ।***

## ८. मित्रस्य मुखात् पाठस्य पञ्चमम् अनुच्छेदं श्रुत्वा उत्तरं वदत

(क) प्राप्तानि कर्माणि कथं सम्पादनीयानि ?

(ख) पिता किम् आश्वासयामास ?

(ग) सङ्गीतं कथम् उत्पद्यते स्म ?

(घ) राजा किमर्थमु उत्सुकः अभवत् ?

(ङ) कतिसमयाभ्यन्तरे कार्यं करणीयमासीत् ?

९. सत्यवाक्ये 'आम्' इति वदत, असत्यवाक्ये 'नहि नहि' इति वदत

(क) सत्यकथने संविधानस्य उल्लङ्घनरहस्यम् उद्घाटितं भवति स्म ।

(ख) सा कुप्रथा कुतः सञ्चाल्यमाना अस्ति इति राजा जानाति स्म ।

(ग) आङ्दावा राजकुमार्या सह विवाहम् अकरोत् ।

(घ) इतः परं अशक्तान् वृद्धजनान् गृहान्निष्काशनं न कुर्वन्तु इति राज्ञः आदेशः ।

(ङ) आङ्दावा पुनः वने त्यक्तः ।

११. पाठस्य कथायाः सन्देशः कः ? स्वमातृभाषायां वदत ।

१२. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

(क) श्रवणपाठं श्रुत्वा उत्तरं सत्यम् असत्यं वा इति वदत

(अ) धनमेव जीवनमस्ति ।

(आ) अद्यतनः जनः शनैः शनैः संवेदनाहीनः भवन् अस्ति ।

(इ) मातरः पितरश्च सन्ततीनां सान्निध्यं नाभिलषन्ति ।

(ई) विदेशेषु सुखसौविध्यं सम्प्राप्य अधिकास्तु तत्रैव वसन्ति ।

(उ) धनं दृष्टिं निर्मापयितुं शक्नोति ।

(ख) श्रवणपाठं श्रुत्वा उत्तरं वदत ।

(अ) सन्ततयः इदानी किं कुर्वन्ति ?

(आ) धनं किं किं कर्तु शक्नोति ?

(इ) धनं किं किं कर्तु न शक्नोति ?

(ई) मातरः पितरश्च किमिच्छन्ति ?

(उ) अद्यतनः जनः कीदृशः अभवत् ?

## पठनम्

१. पाठस्य कथायाः सस्वरं पठनं कुरुत ।

२. लेख्यचिह्नानि विचार्य पाठस्य चतुर्थम् अनुच्छेदं पठत ।

३. अन्तिमस्य त्रयाणां अनुच्छेदानां निरवच्छिन्नपठनं कुरुत ।

४. पाठस्य द्वितीयम् अनुच्छेदं मनसा पठित्वा समुचितम् उत्तरं चिनुत

(क) आङ्फुर्वा कुत्र प्रस्थितवान् ?

(अ) गृहं प्रति (आ) क्षेत्रं प्रति (इ) महारण्यं प्रति

(ख) कः आत्मानं धिक्कृतवान् ?

(अ) राजा (आ) आङ्दावा (इ) आङ्फुर्वा

(ग) मार्गे के प्रक्षिप्ताः सन्ति ?

(अ) किसलयाः (आ) पाषाणाः (इ) सखायः

(घ) आङ्फुर्वा किम् उल्लङ्घयितुं न शक्नोति स्म ?

(अ) राजाज्ञां (आ) संविधानम् (इ) परमात्मानम्

(ङ) कः अवाक् आसीत् ?

(अ) राजा (आ) आङ्दावा (इ) आङ्फुर्वा

## ५. पाठं पठित्वा उत्तरयत

(क) राजा कतिविधाः समस्याः प्रस्तुतवान् ? काः च ताः ?

(ख) आङ्फुर्वा किमर्थं पितरं वने न त्यक्तवान् ?

(ग) वृद्धाः किमर्थं महत्त्वपूर्णाः भवन्ति ?

(घ) तत्रत्या परम्परा का आसीत् ?

(ङ) अस्याः कथायाः सन्देशः कः ?

## ६. संवादं पठित्वा प्रश्नानाम् उत्तराणि वदत

उषा– स्वीकुरु चायम् । चायपानेन सह अल्पाहारमपि स्वीकरोषि ?

रमा– अलं मास्तु, चायपानमात्रेण अलम् । चायमपि नितरां स्वादु वर्तते । वद उषे ! अद्य प्रातः त्वया किं किं भुक्तम् ? मह्यं तु ओदनेन सह कारवेल्लस्य उपसेचनकं रोचते, तुभ्यं किं किं रोचते ?

उषा– मह्यं तु ग्रन्थिगोभी रोचते । एवञ्च अद्य आलुकस्य तथा पनसस्य च व्यञ्जनं निर्मितमासीत् । तदतीव स्वादु आसीत् । परन्तु रमे, साम्प्रतम् आपणे विक्रियमाणेषु शाकेषु तादृशः स्वादः नैव उपलभ्यते, तव ग्रामे तु स्वकीयक्षेत्रे एव शाकानि उत्पाद्यन्ते किल !

रमा– सत्यम्, मम गृहे तु स्वयमेव शाकानाम् उत्पादनं भवति ।

उषा– किं किं फलति तव ग्रामे ?

रमा– मम ग्रामे गोजिह्विका, ग्रन्थिगोभी, पुष्पगोभी च उत्पाद्यन्ते । एवं घोषकः, पटोलः, भिण्डीतकः, भण्टाकी च मिलन्ति । तथैव यथासमयं चन्द्रसूरः, पालङ्की, पत्रशाकञ्च मिलति ।

उषा– (घटिकां पश्यति) अहो ! इदानीं तु सायं पञ्चवादनकालः सञ्जातः । इदानीं मम गृहे गमनवेला अस्ति । अहं गन्तुम् इच्छामि ।

रमा– अस्तु, पुनर्मिलाव ।

(क) रमायै ओदनेन सह किं रोचते ?

(ख) उषायाः गृहे कीदृशं व्यञ्जनं निर्मितमासीत् ?

(ग) रमायाः ग्रामे किं किं फलति ?

(घ) संवादानुसारमिदानीं कतिवादनः सञ्जातः ?

(ङ) रमायाः उषायाः वा गृहे संवादः कुत्र सञ्चलन् अस्ति ?

उषा– चिया खाऊ । चियासँगै खाजा पनि खाने ?

रमा– भयो, नखाने । चिया मिठो छ । उषा भन त आज बिहान तिमीले के के खायौ ? मलाई त भातसँग करेलाको अचार मनपर्छ । तिमीलाई के मनपर्छ ?

उषा– मलाई त बन्दा मनपर्छ । आज आलु र कटहरको तरकारी पाकेको थियो । त्यो पनि मिठो थियो । तर रमा अहिले बजारमा पाइने तरकारीमा त्यस्तो स्वाद नै छैन । तिम्रो गाउँमा त आफ्नै बारीमा तरकारी फल्छ होइन ?

रमा– हो । हाम्रो घरमा त आफ्नै बारीमा तरकारी फल्छ ।

उषा– के के फल्छ तिम्रो गाउँमा ?

रमा– गाइजिब्रे, बन्दा, काउली फल्छन् । त्यसै गरी घिरौँला, परवर, भिण्डी, भ्यान्टा पनि पाइन्छ । त्यसै गरी समय समयमा चम्सूर, पालुङ्गो र अन्य सागहरू पाइन्छन् ।

उषा– (घडी हेरेर) ओहो ! बेलुकाको पाँच बजिसकेछ । घर जाने बेला भयो । म जान्छु ।

रमा– हुन्छ । फेरि भेटौँला ।

७. उपरितनम् एव संवादं पठित्वा रिक्तस्थानानि पूरयत

(क) मम ग्रामे...................... उत्पाद्यन्ते ।

(ख) .................................. कारवेल्लस्य उपसेचनकं रोचते ।

(ग) मम गृहे तु..........................................।

(घ) इदानी तु सायं पञ्चवादनकालः.................. ।

(ङ) ............................पुनर्मिलाव ।

८. प्रदत्तां कथां पठित्वा प्रश्नोत्तराणि लिखत

एकस्मिन् तपोवने महातपाः नाम मुनिः आसीत् । सः मुनिः एकदा काकेन नीयमानं मूषकशावकम् अपश्यत् । ततः स्वभावदयात्मासौ तं शावकमरक्षत् । एकदा एकः बिडालः तं मूषकं खादितुम् अधावत् । तम् अवलोक्य मूषकः तस्य मुनेः अङ्के प्राविशत् । तदा मुनिः उवाच- मूषकः त्वं मार्जारो भव । ततः सः मार्जारः अभवत् । स च मार्जारः कुक्कुरात् भीत्वा धावति । इदं दृष्ट्वा मुनिः अकथयत्- कुक्कुरात् बिभेषि ? त्वमपि कुक्कुरो भव । पश्चात् स एव कुक्कुरः व्याघ्रात् भीतः भवति । ततः सः मुनिः तं कुक्कुरं व्याघ्रम् अकरोत् । अथ स व्याघ्रः तपोवने एव वसति । मुनिः च तम् मूषकदृष्ट्या एव पश्यति । तत्र सर्वे मुनयः तं व्याघ्रं दृष्ट्वा वदन्ति स्म- अयं मुनिः इमं मूषकं व्याघ्रमकरोत् इति । एतत् श्रुत्वा व्याघ्रः अचिन्तयत्- यावदयं मुनिः जीवति तावत् मम अपकीर्तिः न अपगमिष्यति । इति विचार्य सः व्याघ्रः मुनिं हन्तुम् उद्यतः अभवत् । मुनिरपि पुनर्मूषिको भव इति पुनः मूषकम् एव अकरोत् ।

एउटा चौतारा सहितको रुख । त्यहाँ ऋषि बसिराखेका । छेउमा चक्रीय पारामा मुसा, बिरालो, कुक्कुर र बाघको तस्बिर । जसले पहिलेको मुसो अन्तिममा फेरि मुसो भएको सङ्केत गर्दछ ।

(क) मार्जारः कस्मात् बिभेति ?

(ख) मुनिः किमपश्यत् ?

(ग) सर्वे मुनयः किं वदन्ति स्म ?

(घ) यावत् ऋषिः जीवति तावत् किं भवति ?

(ङ) मूषकः केषां जीवनानि अनुभूतवान् ?

एउटा जङ्गलमा महातप नामका ऋषि थिए । उनले एक दिन कागले च्यापेर ल्याएको मुसाको बच्चा देखे । दयालु ऋषिले मुसालाई बचाए । एक दिन बिरालाले मुसालाई खानलाई लखेट्यो । त्यो देखेर मुसो ऋषिको काखमा चढ्यो । त्यो देखेर मुनिले वरदान दिएर मुसालाई बिरालो बनाइदिए । त्यसपछि मुसो बिरालो भयो । एक दिन बिरालो कुक्कुरबाट डराउँदै भाग्यो । देखेर ऋषिले त्यसलाई कुक्कुर बनाइदिए । पछि त्यो कुक्कुर बाघबाट डराएको देखेर ऋषिले बाघ नै बनाइदिए । त्यसपछि त्यो त्यहीँ रहन थाल्यो । मुनि उसलाई मुसाजस्तै मान्थे । त्यहाँ भएका अरू ऋषिहरू यो मुसालाई महातपले बाघ बनाइदिएका हुन् भन्थे । त्यो सुनेर बाघले सोच्यो-जबसम्म ऋषि रहन्छन् तब सम्म आफ्नो अपकीर्ति जाँदैन । त्यसैले बाघले ऋषिलाई मार्न तत्पर भयो । ऋषिले तत्काल फेरि मुसो भइजा भने । त्यो फेरि मुसो भयो ।

## लेखनम्

१. पाठपूर्वस्थां लघुकथां स्वस्य पुस्तिकायां लिखत ।

२. अधस्तपदानि प्रयुज्य वाक्यरचनां कुरुत

किंकर्तव्यविमूढः, रज्जुः, महारण्ये, औचित्यम्, शक्नुवन्ति, अश्रुपूरितौ, आङ्फुर्वा, वृक्षकिसलयान्, प्रतिज्ञोचितम्, विद्ध्वा, पारितोषिकम्, निर्माणोपायम् ।

३. अधस्तनं श्लोकं पठित्वा गुरोः साहाय्येन तस्य सरलार्थं लिखत ।

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥

४. पाठस्य पञ्चमस्य अनुच्छेदस्य श्रुतिलेखनं कुरुत ।

५. प्रदत्तात् विवरणात् मूलपाठस्य कथायाः पात्राणि एव स्वपुस्तिकायां लिखत




६. एकवाक्येन उत्तरं लिखत

(क) पितापुत्रौ कथं जीवनं निर्वहतः ?

(ख) राज्ञा प्रदत्ता द्वितीया समस्या का आसीत् ?

(ग) पिता पुत्रस्य मार्गदर्शनाय किमकरोत् ?

(घ) राजा किम् उद्घोषितवान् ?

(ङ) मनुष्यस्य सार्थकता कुत्र भवति ?

(च) वृद्धाः कथं महत्त्वपूर्णाः भवन्ति ?

(छ) कः राजकुमार्या सह विवाहमकरोत् ?

७. सरलैः वाक्यैः पाठस्य सन्देशं लिखत ।

८. कथायाः क्रमविन्यासं कुरुत ।

( ) सः बहिः गन्तुं मातुराज्ञां गृहीतवान् ।

( ) कुत्रापि एकाकी न गन्तव्यमिति शिक्षा ।

( ) मा भैषीः । निर्विघ्नोऽयं मार्गः, अतः एकाकी गमिष्यामि । ब्राहमणः कथयामास ।

( ) सः कर्पूरपुटिकायामध्ये कर्कटं निधाय शीघ्रं प्रस्थितवान् ।

( ) सर्पः कर्पूरपुटिकालोभात् तद् भक्षयितुमारब्धवान् । तत्रस्थ कर्कटः सर्पस्य प्राणान् अपाहरत् ।

( ) कुत्रचित् ग्रामे एकः ब्राह्मणः वसति स्म ।

( ) ब्राह्मणः यावत्प्रबुद्धः तावत् मृतं कृष्णसर्प दृष्ट्वा हर्षितः अभवत् ।

( ) माता समीपस्थवाप्याः सकाशात् कर्कटमादाय उक्तवती- गच्छतु । किन्तु कर्कटोऽपि सहायो भवतु इति ।

( ) तस्मिन् एव समये वृक्षकोटरात् निर्गत्य सर्पः तस्य समीपे समागतवान् ।

( ) माता अकथयत्- एकाकी एव गच्छसि ? सहायं विना न गच्छतु इति ।

( ) ग्रीष्मोष्मणा सनतप्तः सः वृक्षतले सुप्तवान् ।

९. मूलपाठस्य कथां पठित्वा परस्परं मेलयत

| समूहः कः | समूहः खः |
|---|---|
| आङ्फुर्वा | परम्परायाः वृत्तान्तं कथितवान् । |
| मन्त्री | परामर्शदातृरूपेण राजप्रासादे नियुक्तः । |
| आङ्दावा | राज्ञः घोषणां प्रसारितवन्तः । |
| कर्मकराः | पितरमूढ्वा महारण्यं जगाम । |

१०. आङ्फुर्वा कथं राजकुमार्या सह विवाहं कर्तुं समर्थः अभवत् ? लिखत ।

११. उदाहरणं विलोक्य कोष्ठकाद् विपरार्थिनः शब्दान् अन्विष्य लिखत

बुद्धिमान्, दयालुः, उष्णः, उच्चैः, यथार्थः, अधिकम्, साधारणः, अनुपलब्धिः,कोलाहलम्, जन्म, दैत्यः

उदाहरणम्

देवः-दैत्यः

१. यथार्थः-

२. नीचैः-

३. न्यूनम्-

४. मृत्युः-

५. मूर्खः-

६. असाधारणः-

७. उपलब्धिः-

८. नीरवताम्-

९. शीतः-

१०. क्रूरः-

## व्याकरणनुशीलनम्

१. शिक्षकसाहाय्येन पूर्वरूपसन्धिनियमान् पठत ।

| पूर्वरूपविधायकं सूत्रम् | सन्ध्यवस्था | | उदाहरणम् | | |
|---|---|---|---|---|---|
| | पूर्वपदम् | उत्तरपदम् | पूर्वपदम् | | सन्धिगतं रूपम् |
| एङः पदान्तादति | पदान्तः एकारः | अकारः | कृते | अपि | कृतेऽपि |
| | पदान्तः ओकारः | अकारः | को | अपि | कोऽपि |
| अमि पूर्वः | अ, इ, उ, ऋ, लृ | अम् (अमः अवयवभूते अचि परे) | राम | अम् | रामम् |
| सम्प्रसारणाच्च | सम्प्रसारणात् | अ, इ, उ, ऋ, लृ, ए, ओ, ऐ, औ | युवन् | अस् | यूनः |

| | | | | | |
|---|---|---|---|---|---|
| ङसिङसोश्च | एकारः | ङसिङसोः अ | हरे | अस् | हरेः |
| | ओकारः | ङसिङसोः अ | विष्णो | अस् | विष्णोः |

२. विवरणं दृष्ट्वा सन्धिगतं रूपं लिखत

| क्रमः | पूर्वपदम् | उत्तरपदम् | सन्धिगतं रूपम् |
|---|---|---|---|
| (क) | ग्रामे | अस्मिन् | |
| (ख) | रामो | अगच्छत् | |
| (ग) | हरि | अम् | |
| (घ) | गुरो | अस् | |
| (ङ) | कवे | अस् | |
| (च) | ज्ञाते | अपि | |
| (छ) | परिचितो | अभूत् | |
| (ज) | हरे | अव | |
| (झ) | रामो | अजायत | |
| (ञ) | गते | अस्ताचले | |

३. पाठात् त्रीणि पूर्वरूपसन्धिस्थलानि अन्विष्य असन्धिभूतानां सन्धिं कृत्वा सन्धिभूतानां च पदानां सन्धिविच्छेदं कृत्वा लिखत ।

## रचनात्मकः अभ्यासः

१. अधस्तान् पदान् प्रयुज्य शिक्षकस्य कथां रचयत । कथायाः शीर्षकं च दत्त ।



२. अधस्तनं चित्रं दृष्ट्वा रिक्तस्थानानि पूरयत

वृद्धाश्रमको तस्बिर । त्यहाँ विभिन्न वृद्धवृद्धाहरूलाई देख्न सकिन्छ । वृद्धवृद्धालाई सेवा गरिरहेका मानिसहरूलाई पनि देख्न सकिन्छ ।

अयं .................. अस्ति । अत्र ..................... सन्ति । वृद्धावस्थायां जनाः ..................... भवन्ति । स्वस्थः आहारः सुस्वास्थ्यस्य ..................... अस्ति । अस्माभिः वृद्धानां..............................कर्तव्या ।

दुर्बलाः, सेवा वृद्धाश्रमः, निदानम्, वयोवृद्धाः, कारणम्,

## श्रवणपाठः

साम्प्रतं नेपालस्य अधिकेषु ग्रामेषु वृद्धाः एव जनाः वसन्ति । सन्ततयः नगरेषु तिष्ठन्ति । नगराच्च ते विदेशेषु गच्छन्ति । विदेशेषु सुखसौविध्यं सम्प्राप्य अधिकास्तु तत्रैव वसन्ति । ते धनादिकं तु प्रेषयन्ति । परन्तु मातरः पितरश्च स्नेहमिच्छन्ति । सन्ततीनां सान्निध्यमभिलषन्ति । धनमेव सर्वं वस्तु नास्ति । धनम् आवश्यकं वस्तु क्रेतुं शक्नोति परन्तु आनन्दं दातुं न शक्नोति । धनम् शय्यां क्रीणाति, निद्राम् आनेतुं न शक्नोति । भोजनं क्रेतुं शक्नोति किन्तु बुभुक्षामानेतुं न शक्नोति । दूरदर्शनं क्रेतुं शक्नोति परन्तु दृष्टिं निर्मापयितुं न शक्नोति । धनं विना जीवनं दुष्करं भवति परन्तु धनमेव जीवनम् नास्ति । सन्ततीभिः सह मेलनाय मातापितरौ सदैव समुत्सुकाः भवन्ति । परन्तु इदानीं सन्ततिभिः सह समय एव नास्ति । कदाचित् अभिभावकैः सह मिलिते अपि तेषां दृष्टिः मोवायनादिषु यन्त्रेषु एव भवति । अधुनातनः जनः यान्त्रिकः अभवत् । अद्यतनः जनः शनैः शनैः संवेदनहीनः भवन् अस्ति । एतस्य परा काष्ठा कीदृशी भविष्यति इति चिन्तनेनापि दुःखमुत्पद्यते ।

नवमः पाठ

# पाठप्रवेशः

मदनः अयि मोहन ! क्वचित् गन्तुकामः किम् ?

मोहनः आम्, मदन ! पुस्तकालयं गच्छन् अस्मि ।

१०,१२ वर्षका दुई केटाहरू कुरा गरिरहेको चित्र । घरको ढोकाबाहिर कतै निस्कन लागेको एउटा केटो र अर्को बाहिरबाट त्यहाँ आइपुगेको केटाका बीचमा संवाद ।

मदनः किमर्थं मदन !

मोहनः किञ्चित् अध्ययनीयम् अस्ति ।

मदनः कस्मिन् विषये अध्ययनीयम् ?

मोहनः स्मृतिविषये किञ्चित् अध्ययनम् आवश्यकम् ।

मदनः स्मृतिविषये ? कासाञ्चन स्मृतीनां नामानि तु अहम् अपि श्रुतवान् अस्मि, यथा- मनुस्मृतिः, याज्ञवल्क्यस्मृतिः, पाराशरस्मृतिः, व्यासस्मृतिः इति परन्तु तत्र के विषयाः भवन्ति इति अहं न जानामि ।

मोहनः स्मृतिग्रन्थेषु शिष्टाचारस्य, सदाचारस्य, कर्तव्यकर्मणाम्, सामाजिकव्यवहारस्य, धार्मिकसंस्काराणाम्, प्रायश्चित्तादीनां च विषयाः भवन्ति आचार्यः याज्ञवल्क्यस्मृतौ उल्लिखितस्य सदाचारस्य विषये अकथयत् । अतः तत् पुस्तकम् अन्वेष्टुं पुस्तकालयं गन्तुम् इच्छामि ।

मदनः अहो ! मम मनसि अपि अस्य विषयस्य जिज्ञासा जागरिता । अतः अहम् अपि गच्छामि ।

मोहनः अस्तु, सहैव गच्छाव ।

मदनः अस्तु गच्छाव ।

**भावः**

मदन घरबाट बाहिर निस्कन लागेका वेला मोहन पुग्छ । कतै जान लागेको हो ?, भनेर मदनले सोधेपछि मोहन आफू पुस्तकालय जान लागेको बताउँछ । पुस्तकालय किन जाने भन्ने प्रश्नको उत्तरमा मोहन केही अध्ययन गर्नुछ भन्छ । फेरि मदनको जिज्ञासामा मोहनले स्मृतिका विषयमा केही अध्ययन गर्नु आफूलाई आवश्यक भएको बताएपछि केही स्मृतिहरूको नाम आफूले पनि सुनेको तर तिनमा कस्ता विषय हुन्छन् भन्ने कुरा मदनले बताउँछ । त्यसको प्रत्युत्तरमा मोहन स्मृतिग्रन्थहरूमा शिष्टाचार, सदाचार, कर्तव्यकर्म, सामाजिक व्यवहार, धार्मिक संस्कार, प्रायश्चित्त आदि विषयहरू हुने बताउँछ । आचार्यले याज्ञवल्क्यस्मृतिमा उल्लिखित सदाचारका विषयमा बताएकाले त्यो पुस्तक खोज्न आफू पुस्तकालय जान लागेको कुरा मोहन भन्छ । त्यो सुनेर मदन आफ्नो मनमा पनि त्यस विषयमा जान्ने इच्छा जागेको भन्दै आफू पनि उसँगै जाने इच्छा प्रकट गर्छ । जाऔँ त भन्दै दुबै पुस्तकालयतर्फ लाग्छन् ।

## धर्माचारः

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥

कुनै ऋषिले आफ्ना थुप्रै शिष्यहरूलाई उपदेश दिइरहेको दृश्य

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥

ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ।
धर्मार्थकामान् स्वे काले यथाशक्ति न हापयेत् ॥

## प्रथमं पद्यम्

पदच्छेदः - अहिंसा, सत्यम्, अस्तेयम्, शौचम्, इन्द्रियनिग्रहः, दानम्, दमः, दया, क्षान्तिः, सर्वेषाम्, धर्मसाधनम् ।

अन्वयः - अहिंसा, सत्यम्, अस्तेयम्, शौचम्, इन्द्रियनिग्रहः, दानम्, दमः, दया, क्षान्तिः, (च) सर्वेषाम्, धर्मसाधनम् (भवति) ।

भावार्थः - प्राणिनाम् अहिंसा धर्मसाधनम् अस्ति । तथैव सत्यभाषणम्, अदत्तस्य अग्रहणम्, शारीरिकी मानसिकी च पवित्रता, ज्ञानेन्द्रियाणां निग्रहः, पात्रेभ्यः अन्नोदकादिदानम्, बाह्येन्द्रियनिग्रहः, शरणागतस्य सुरक्षणम्, अपकारिभ्यः च क्षमादानम् आचारधर्मः अस्ति । एते आचारनियमाः सर्वेषां जनानां कृते समानाः सन्ति ।

## द्वितीयं पद्यम्

पदच्छेदः - श्रुतिः, स्मृतिः, सदाचारः, स्वस्य, च, प्रियम्, आत्मनः, सम्यक्सङ्कल्पजः, कामः, धर्ममूलम्, इदम्, स्मृतम् ।

अन्वयः - श्रुतिः, स्मृतिः, सदाचारः, स्वस्य, आत्मनः, प्रियम्, सम्यक्सङ्कल्पजः, कामः, च, इदम्, धर्ममूलम्, स्मृतम् ।

भावार्थः - वेदेषु, स्मृतिषु च धर्माचारस्य नियमाः समुल्लिखिताः भवन्ति । सज्जनानाम्

आचरणम्, स्वात्मप्रियः व्यवहारः, सम्यक् चिन्तनेन उत्पना कामना च धर्मस्य मूलं प्रमाणम् । एतेषां विचारेण कृतः व्यवहारः धर्माचारः एव भवति ।

## तृतीयं पद्यम्

पदच्छेदः - देशे, काले, उपायेन, द्रव्यम्, श्रद्धासमन्वितम्, पात्रे, प्रदीयते, यत्, तत्, सकलम्, धर्मलक्षणम् ।

अन्वयः - देशे, काले, उपायेन, (च) श्रद्धासमन्वितम्, यत्, द्रव्यम्, पात्रे, प्रदीयते, तत्, सकलम्, धर्मलक्षणम् ।

भावार्थः - दानं धर्माचारः अस्ति । अतः पवित्रे क्षेत्रे, उचिते काले, योग्याय पात्राय दानं देयम् । दानं श्रद्धया देयम् । केनचित् उपायेन उपयोगि द्रव्यम् एव दातव्यम् । एतादृशं दानं खलु धर्मः भवति ।

## चतुर्थं पद्यम्

पदच्छेदः - इज्या-ऽऽचार-दमा-ऽहिंसा-दान-स्वाध्यायकर्मणाम्, अयम्, तु, परमः, धर्मः, यद्, योगेन, आत्मदर्शनम् ।

अन्वयः - इज्या-ऽऽचार-दमा-ऽहिंसा-दान-स्वाध्यायकर्मणाम्, अयम्, तु, परमः, धर्मः, (अस्ति) यद्, योगेन, आत्मदर्शनम् ।

भावार्थः - यज्ञानुष्ठानं धर्मकार्यम् अस्ति । सम्यक् आचारः अपि धर्मः एव । इन्द्रियनिग्रहः, अहिंसाव्रतस्य पालनम्, दानम्, स्वाध्यायः, पुण्यं कर्म च धर्मकार्याणि सन्ति । यद्यपि एतेषां कार्याणाम् अनुशीलनेन धर्मः भवति तथापि परमः धर्मः स एव, यदा तु चित्तवृत्तेः परमात्मनि योगेन आत्मदर्शनं भविष्यति ।

## पञ्चमं पद्यम्

पदच्छेदः - ब्राह्मे, मुहूर्ते, च, उत्थाय, चिन्तयेत्, आत्मनः, हितम्, धर्मार्थकामान्, स्वे, काले, यथाशक्ति, न, हापयेत् ।

अन्वयः - ब्राह्मे, मुहूर्ते, उत्थाय, आत्मनः, हितम्, चिन्तयेत् । स्वे, काले, धर्मार्थकामान्, च, यथाशक्ति, न, हापयेत् ।

भावार्थः - ब्राह्मे मुहूर्ते व्युत्थानं कुर्यात् । तस्मिन् समये चित्तं शान्तं भवति । तदा

चिन्तनं सम्यक् भवति । अतः तदा आत्मनः हितस्य विषये चिन्तनं कुर्यात् । धर्माचरणं यथाशक्ति कर्तव्यम् । पापाचरणं कदापि न करणीयम् । तथैव अर्थस्य, कामस्य च व्यवहारः यथाशक्ति करणीयः । धर्मः, अर्थः, कामः च कदापि न त्यक्तव्याः ।

## शब्दार्थाः

| | |
|---|---|
| अहिंसा | हिंसाराहित्यम्, प्राणीहरूको अपीडन, Non-violece |
| सत्यम् | ऋतम्, साँचो, True |
| अस्तेयम् | अचौर्यम्, चोरी नगर्नु, Not stealing |
| शौचम् | पवित्रता, शुद्धता, Holiness |
| इन्द्रियनिग्रहः | इन्द्रियनियमनम्, इन्द्रियहरूमाथि नियन्त्रण, Restraint |
| दानम् | प्रदानम्, दान दिनु, Donation |
| दमः | बाह्येन्द्रियनियमनम्, बाहिरी इन्द्रियअरूमाथि नियन्त्रण, Control of external senses |
| दया | कृपा, दया, Kindness |
| क्षान्तिः | क्षमा, क्षमाशील हुनु, Forgiveness |
| श्रुतिः | आम्नायः, वेदः, Ved |
| स्मृतिः | धर्मशास्त्रम्, स्मृति, Theology |
| सदाचारः | साध्वाचारः, असल आचरण, Good manners |
| प्रियम् | रुचिकरम्, प्यारो, Lovely |
| सम्यक् | शोभनम्, राम्रो, Good |
| सङ्कल्पः | कल्पनम्, कल्पना, Imagination |
| कामः | स्पृहा, इच्छा, Desire |
| देशः | स्थानम्, ठाउँ, Place |

| | |
|---|---|
| कालः | समयः, वेला, Time |
| श्रद्धा | विश्वासादरः, श्रद्धा, Respect for faith |
| सकलम् | सम्पूर्णम्, सबै, All |
| इज्या | सत्रः, यज्ञ, Yagna |
| आचारः | आचरणम्, व्यवहार, Behavior |
| परमः | उत्कृष्टः, उत्तम, Excellent |
| आत्मदर्शनम् | ब्रह्मसाक्षात्कारः, आत्माको अनुभूति, Self-realization |
| यथाशक्ति | सामर्थ्यानुसारम्, शक्तिअनुसार, |

## पाठाभ्यासः

### अभ्यासः

### श्रवणं भाषणञ्च

१. शिक्षकमुखाद् अधः प्रदत्तानि पदानि श्रुत्वा अनूच्चारयत

अहिंसा, इन्द्रियनिग्रहः, क्षान्तिः, श्रुतिः, सम्यक्, श्रद्धासमन्वितम्, ब्राह्मे, स्वे, आत्मदर्शनम्

२. उदाहरणम् अनुसृत्य अधस्तनपदानां पदच्छेदं विधाय श्रावयत

उदाहरणम् : इन्द्रियनिग्रहः = इन्द्रिय+निग्रहः

धर्मसाधनम्, धर्ममूलम्, सङ्कल्पजः, धर्ममूलम्, धर्मलक्षणम्, आत्मदर्शनम्, यथाशक्ति

३. पाठस्य प्रथमद्वितीये पद्ये यथालयम् अनुवाचयत ।

४. अधस्तनं पद्यं कक्षायां युगपत् प्रवाच्य तत्र आगतानि सप्तमान्तपदानि श्रावयत ।

ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ।<br>
धर्मार्थकामान्स्वे काले यथाशक्ति न हापयेत् ॥

५. अधस्तनपदेषु समागतानां संयुक्तवर्णानां शुद्धम् उच्चारणं विधाय कक्षायां श्रावयत

सत्यम्, उत्थाय, स्वस्य, यत्तत्, द्रव्यम्, इज्या, स्वाध्यायः, मुहूर्ते, पात्रे

६. अनुवाचनपूर्वकं शिक्षकात् अधस्तनपद्ययोः अर्थं श्रुत्वा प्रदत्तानां प्रश्नानाम् उत्तरं कथयत

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैः गुणत्वमापन्नैः बध्यन्ते मत्तदन्तयः ॥
शोको नाशयते धैर्यं शोको नाशयते श्रुतम् ।
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥

(क) का कार्यसाधिका भवति ?

(ख) मत्तदन्तयः कथं बध्यन्ते ?

(ग) शोकः किं किं नाशयते ?

(घ) कः सर्वेषां रिपुः अस्ति ?

७. अधस्तनानि सम्बोधनबोधकपदानि प्रयुज्य एकैकं वाक्यं कक्षायां श्रावयत

परिश्रमी, नवीनम्, हस्ताभ्याम्, शिक्षकाय, विदेशात्, विद्यालयस्य, गृहेषु, हे जननि

८. अधस्तनम् अनुच्छेदं सम्यग् उच्चार्य नेपाल्याम् अर्थं वदत

वस्तुनः यथार्थप्रकटनम्, यथार्थभाषणं च सत्यम् अस्ति । अस्माकं पूर्वजाः 'सत्यं वद' इति उपदिशन्ति स्म । सत्यस्य अन्वेषणे ते प्रायतन्त । इदं सर्वम् अपि जगत् सत्ये प्रतिष्ठितम् अस्ति । अतः अस्माकं व्यवहारः विचारः, भाषणं च सत्यं भवेत् । यत् आसीत्, यद् अस्ति यद् च भविष्यति, सत्यवादिनः तद् एव वदन्ति । यत् कर्तव्यम्, यया रीत्या कर्तव्यम्, सत्कर्मिणः तदेव कुर्वन्ति । अतः जनाः सत्यवादिनं सत्कर्मिणं च श्रद्धया विश्वसन्ति । लोकविरुद्धः कपटयुक्तः च आचारः असत्यं भवति । सत्यं कदाचित् कस्यचित् अप्रियं भवितुं शक्नोति परन्तु औषधम् इव तदेव स्वीकार्यं कालान्तरे हितकरं च भवति । अतः अस्माभिः सत्यं वक्तव्यम् । सत्यस्य अनुकरणम् अपि धर्मः एव वर्तते ।

**भाषानुवादः**

वस्तुको यथार्थ प्रकट गर्नु र यथार्थ बोल्नु सत्य हो । हाम्रा पुर्खाहरू 'सत्य बोल' भनेर हामीलाई उपदेश दिन्थे । सत्यको खोजी गर्न उनीहरूले सधैँ प्रयास गरे । यो सम्पूर्ण जगत् सत्यमा अडिएको छ । त्यसैले हाम्रो व्यवहार, विचार र वचन सत्य होओस् । जे थियो, जे छ र जे हुनेछ; सत्यवादी मानिसहरू त्यही नै बोल्दछन् । जे गर्नुपर्छ,

जसरी गर्नुपर्छ; सत्कर्मी मानिसहरू त्यही नै गर्दछन् । अतः मानिसहरूले सत्यवादी र सत्कर्मीहरूलाई श्रद्धापूर्वक विश्वास गर्दछन् । लोकविरोधी कपटी व्यवहार असत्य हो । सत्य कहिलेकाहीँ कसैका लागि अप्रिय हुन सक्छ तर औषधी झैँ त्यही नै स्वीकार्य र कालान्तरमा हितकारी पनि हुन्छ । त्यसकारण हामीले सत्य बोल्नुपर्छ । सत्यको अनुकरण गर्नु पनि धर्म नै हो ।

चित्रनिर्देश

वातावरण प्रदूषण भएको सहरको परिवेश देखिने चित्र ।

९. नेपालीभाषया चित्रवर्णनं कृत्वा सखीन् श्रावयत **(शब्द दिनुपर्छ)**

१०. उदाहरणानुसारं कोष्ठकस्थपदेभ्यः अर्थबोधं विधाय प्रदत्तपदानाम् अर्थं वदत

आत्मवस्तुनः साक्षात्कारः, चिन्तनसमुद्भूतः, सद्भावनायुक्तम्, सामर्थ्यानुसारम्, इन्द्रियाणां वशीकरणम्, धर्मपरिचायकम्,

उदाहरणम् : इन्द्रियनिग्रहः = इन्द्रियाणां वशीकरणम्

(क) सङ्कल्पजः = ..........................

(ख) श्रद्धासमन्वितम् = ..........................

(ग) धर्मलक्षणम् = ..........................

(घ) आत्मदर्शनम् = ..........................

(ङ) यथाशक्ति = ..........................

११. अधस्तनानि वाक्यानि श्रुत्वा सत्यवाक्ये 'आम्' असत्यवाक्ये 'नहि' इति वदत

क) स्वाध्यायः सर्वेषां धर्मसाधनम् अस्ति । ............

ख) आत्मनः प्रियः व्यवहारः अपि धर्ममूलम् अस्ति ।..........

ग) दानं धर्माचारः नास्ति । ............

घ) आत्मदर्शनं परमः धर्मः कथ्यते । ...........

...........

ङ) सर्वदा धर्मः एव चिन्तनीयः ।

१२. सर्वेषां धर्मसाधनं किं किम् अस्ति । सखिभिः सह विमृश्य वदत ।

१३. मानवानां धर्माचारविषये अधीतपाठानुसारं वर्णनं कुरुत ।

## पठनम्

### १. विपरीतार्थबोधकानि क्रियापदानि परस्परं मेलयत

| | |
|---|---|
| वसति | रोदिति |
| हसति | गृह्णाति |
| ददाति | उत्तिष्ठति |
| नाशयति | वर्धते |
| क्षीयते | रक्षति |

### २. उदाहरणानुसारं पदानाम् अन्वयं विधाय वाक्यं वदत

उदाहरणम् : सरस्वती माध्यमिक विद्यालयः अस्ति विद्यालयस्य मम नाम ।

मम विद्यालयस्य नाम सरस्वती माध्यमिक विद्यालयः अस्ति ।

(क) विद्यालये सुन्दरः मम पुस्तकालयः अस्ति ।

(ख) मम परितः विद्यालयस्य पुष्पवाटिका मनोहरा अस्ति एका ।

(ग) चत्वरे विद्यालयस्य विद्यार्थिनः खेलन्ति सह मित्रैः।

(घ) स्नेहेन गुरवः शिक्षयन्ति अस्मान् ।

(ङ) सम्मानं कुर्मः गुरूणां वयम् अपि ।

### ३. अधस्तनमनुच्छेदं निरवच्छिन्नं पठत

अहं ग्रामे वसामि । मह्यं ग्रामः रोचते । अस्माकं देशे नगरेभ्यः अधिकाः ग्रामाः सन्ति । ग्रामे निवसतां जनानां च सङ्ख्या अधिका अस्ति । ग्रामीणाः जनाः सहयोगिनः सरलाः धार्मिकाः च भवन्ति । जनाः कृषिकर्म कुर्वन्ति; पशून् पालयन्ति । कृषीवलाः श्रमेण अन्नानि समुत्पाद्य जगत् पालयन्ति । स्वच्छं नवीनं च शाकानि अन्नानि फलानि च खादित्वा ग्रामीणाः स्वस्थाः बलिष्ठाः च भवन्ति । अत्रत्यं पर्यावरणम् अपि स्वस्थकरं निर्मलं च भवति । ग्रामे पशवः चरन्ति; पक्षिणः कूजन्ति; हंसाः क्रीडन्ति । अत्रत्याः जनाः धर्मपथं न विस्मरन्ति । अत एव ग्रामे मानवतायाः सम्मानं क्रियते ।

### भाषानुवाद

म गाउँमा बस्छु । मलाई गाउँ मन पर्छ । हाम्रो देशमा सहरभन्दा धेरै गाउँहरू छन् । गाउँमा बस्ने मानिसहरूको सङ्ख्या पनि धेरै छ । गाउँलेहरू सहयोगी, सोझा र धार्मिक हुन्छन् । मानिसहरू खेतीपाती गर्दछन्; पशुपालन गर्दछन् । किसानहरू श्रमपूर्वक गरेर अन्न उत्पादन गरी जगत्लाई नै पाल्दछन् । ताजा र नयाँ नयाँ सागपात, अन्न र फलफूल खाएर गाउँलेहरू निरोगी र बलिया हुन्छन् । यहाँको पर्यावरण पनि स्वस्थकर र निर्मल हुन्छ । गाउँमा पशुहरू घुम्छन्; पन्छीहरू मधुर आवाजमा कराउँछन्; हाँसहरू खेल्दछन् । यहाँका मानिसहरूले धर्मको बाटोलाई बिर्सिंदैनन् । त्यसैले गाउँमा मानवताको सम्मान गरिन्छ ।

४. मित्रैः सह सस्वरं यथालयं पठत

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः<br>
कामः क्रोधस्तथा लोभः तस्मात् एतत् त्रयं त्यजेत् ॥<br>
सुलभाः पुरुषाः लोके सततं प्रियवादिनः<br>
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥

### भाषानुवाद

आफूलाई नष्ट गराउने नरकका तीन प्रकारका ढोका छन्, काम, क्रोध र लोभ । त्यसैले यिनलाई त्याग्नुपर्छ ॥

सधैँ मिठो बोल्ने मानिस संसारमा जति पनि पाइन्छन् तर अप्रिय भए पनि हितकर बोल्ने र सुन्ने दुवै व्यक्ति संसारमा दुर्लभ छन् ।

५. शिक्षकसाहाय्येन यथालयं पद्यं पठित्वा परस्परं मेलयत

अनाहुतः प्रविशति अपृष्टो बहु भाषते ।<br>
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥<br>
अकीर्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः ।<br>
हन्ति नित्यं क्षमा क्रोधम् आचारो हन्त्यलक्षणम् ॥

**भाषानुवाद**

बुद्धिहीन मूर्ख व्यक्ति नबोलाएको ठाउँमा जान्छ; नसोधेको कुरामा पनि धेरै बोल्छ र विश्वास नगर्ने ठाउँमा विश्वास गर्छ ।

विनम्रताले अपयशलाई, पराक्रमले अनर्थलाई, क्षमाले क्रोधलाई र असल आचारविचारले कुलक्षणलाई नष्ट गर्छ ।

| | |
|---|---|
| अनाहुतः | अकीर्तिं हन्ति |
| विनयः | क्रोधं हन्ति |
| क्षमा | प्रविशति |
| अपृष्टः | विश्वसिति |
| पराक्रमः | अलक्षणं हन्ति |
| अविश्वस्ते | बहु भाषते |
| आचारः | अनर्थं हन्ति |

६. श्रवणपाठं पठित्वा अधस्तनान् प्रश्नान् उत्तरयत

(क) मानवजीवनं कथं कीदृशं च जातम् ?

(ख) वयं किं किं कर्तुं शक्नुमः ?

(ग) यन्त्रमाध्यमेन कृषिक्षेत्रे कीदृशानि कार्याणि क्रियन्ते ?

(घ) कस्य माध्यमेन सञ्चारसाधनानि सुलभानि ?

(ङ) केषाम् अङ्गानां प्रत्यारोपणं कर्तुं शक्यते ?

७. श्रवणपाठं पठित्वा नेपालीभाषायां पञ्चभिः वाक्यैः वैज्ञानिकचमत्कारः इति विषये स्वविचारं कथयत ।

८. श्रवणपाठस्य द्वितीयम् अनुच्छेदं पठित्वा कक्षायां श्रावयत ।

९. श्रवणपाठं पठित्वा रिक्तस्थानस्य पदानि चिनुत

विज्ञानस्य ................. मानवानां कृते पृथिव्याः सर्वाणि ............ सुप्राप्यानि अभवन् । इदानी सर्वेऽपि मानवाः सुखिनः ........... । विज्ञानस्य अनुपस्थितिः इदानी ............ न दृश्यते । वातानुकूलनसाधनम् अपि ............. प्राप्तं विज्ञानस्य ............... एव अस्ति ।

१०. पाठस्थपद्येभ्यः कानिचन पञ्च समस्तपदानि लिखत ।

११. पाठप्रवेशस्य संवादपाठस्य मौनपठनं कृत्वा चतुर्णां स्मृतिग्रन्थानां नामानि लिखत ।

१३. चित्रसाहाय्येन प्रदात्तान् प्रश्नान् उत्तरयत

चित्रनिर्देश :

नेपाली शैलीको मन्दिर र प्राचीन दरबार । दरबारको एक छेउमा नेपाली झन्डा । आँगनमा पर्यटकहरू अवलोकन गरिरहेका । मन्दिरको अगाडि दुई खम्बाको आडमा ठुलो घन्टी झुन्डिएको । दरबार र मन्दिरको पछाडि बिच( तिर सानो बौद्ध चैत्य । चैत्यमा ध्वजापताका पनि देखिएको चित्र । भएको

(क) चित्रे दृष्टं भवनं किम् अस्ति ?

(ख) राष्ट्रियपताका कुत्र दृश्यते ?

(ग) मन्दिरं कस्यां शैल्यां निर्मितम् अस्ति ?

(घ) पर्यटकाः किं पश्यन्तः सन्ति ?

(ङ) महती घन्टा कुत्र अस्ति ?

## लेखनम्

१. अधस्तनानि पदानि अभ्यासपुस्तिकायां शुद्धतया लिखत

याज्ञवल्क्यस्मृतिः, सामाजिकव्यवहारस्य, इन्द्रियनिग्रहः, सङ्कल्पजः, श्रद्धासमन्वितम्, आत्मदर्शनम्, यथाशक्ति ।

२. अधस्तनानां पदानाम् अशुद्धीः निराकुरुत

सौचम्, छ्यान्तिः, सुर्तिः, स्मृतीः, षदाचारः, सम्यक, द्रब्यम्, ब्राम्हे, मुहुर्ते, ऊत्थाय, हीतम् ।

३. अधस्तनानां पदानाम् अर्थं लिखत

अहिंसा, अस्तेयम्, दमः, धर्ममूलम्, सकलम्, इज्या, स्वाध्यायः, मुहूर्तम्, यथाशक्ति ।

४. पाठस्य प्रथमस्य श्लोकस्य श्रुतलेखनं कुरुत ।

५. पाठस्य श्लोकान् भावार्थान् च पठित्वा निम्नप्रश्नानाम् उत्तराणि लिखत

(क) प्राणिनाम् अहिंसा किम् अस्ति ?

(ख) शरणागतस्य किं कर्तव्यम् ?

(ग) के सर्वेषां कृते समानाः भवन्ति ?

(घ) कुत्र कुत्र धर्माचारस्य नियमाः लिखिताः सन्ति ?

(ङ) सज्जनानाम् आचरणं किम् अस्ति ?

(च) कस्मै दानं देयम् ?

(छ) दानं कथं देयम् ?

(ज) कीदृशं द्रव्यं दातव्यम् ?

(झ) यज्ञानुष्ठानं किम् अस्ति ?

(ञ) कानि धर्मकार्याणि सन्ति ?

(ट) परमः धर्मः कः अस्ति ?

(ठ) कदा उत्थातव्यम् ?

(ड) कस्य विषये चिन्तनं कर्तव्यम् ?

(ढ) यथाशक्ति किं कर्तव्यम् ?

(ण) के न त्यक्तव्याः ?

६. अधस्तनं गद्यं पठित्वा प्रदत्तानि कार्याणि कुरुत

मानवः जीवनकाले बहून् विषयान् ज्ञातुमिच्छति । स पूर्वजानाम् अनुकरणीयं कार्यं दृष्ट्वा ज्ञानमर्जयति । ग्रन्थानधीत्य, वार्तां श्रुत्वा, आत्मना परीक्ष्य, वस्तूनि निरीक्ष्य च अधिकं जानाति । स कीटपशुपक्षिभ्यः च ज्ञानमर्जयति । पिपीलकाः निरन्तरं श्रमं कुर्वन्ति । तेभ्यः श्रमस्य गौरवं जानाति । श्वानः गृहस्य सुरक्षां करोति । एष स्वामिभक्तः अस्ति । सदा स्वकर्तव्यं पालयति । मानवः एतस्मात् कर्तव्यपालनस्य शिक्षां गृह्णाति । मधुमक्षिकाः समूहे मिलित्वा मधुसञ्चयं कुर्वन्ति । एताभ्यः मानवः सामूहिककार्यस्य लाभविषये जानाति । वृक्षः पत्रं, पुष्पं, फलं, काष्ठं च अन्येषां प्रयोजनाय प्रयच्छति । अस्माद् मानवः परोपकारस्य शिक्षामर्जयति । पुष्पं सौन्दर्यं सुगन्धं च प्रसारयति । मानवः अपि गौरववर्धनाय स्वकीर्तिप्रसारणस्य शिक्षां पुष्पाद् गृह्णाति । अतः जीवने यस्मात् कस्मादपि विषयात् ज्ञानम् अर्जितव्यम् ।

(क) एकपदेन उत्तरयत

(अ) मानवः केषाम् अनुकरणीयं कार्यम् अनुकरोति ?

(आ) मानवः कान् अधीत्य ज्ञानमर्जयति ?

(इ) कीटाद् अपि मानवः किम् अर्जयति ?

(ई) श्वानः कीदृशः अस्ति ?

(उ) मानवः कस्मात् परोपकारस्य शिक्षामर्जयति ?

(ख) पूर्णवाक्येन उत्तरयत

(अ) मानवः जीवनकाले किम् इच्छति ?

(आ) मानवः कथम् अधिकं जानाति ?

(इ) मधुमक्षिकाः किं कुर्वन्ति ?

(ई) वृक्षः अन्येषां प्रयोजनाय कानि प्रयच्छति ?

(उ) जीवने कुतः ज्ञानम् अर्जितव्यम् ?

(ग) अस्य गद्यांशस्य सारं स्वभाषया लिखत ।

(घ) भाषिककार्य कुरुत

(अ) 'विषयान्' इत्यस्य विभक्तिः का ?

(आ) 'कीटपशुपक्षिभ्यः' अत्र कतिशब्दानां मेलनम् अस्ति ?

(इ) 'कुसुमम्' इत्यस्य पर्यायः अनुच्छेदे कः प्रयुक्तः ?

(ई) 'मिलित्वा' इत्यस्य प्रत्ययः कः ?

(उ) 'मधुमक्षिका समूहे मिलित्वा मधुसञ्चयं करोति' इति वाक्यस्य बहुवचनं किं भवति ?

अर्थ - मानिस जीवनकालमा धेरै विषय जान्न चाहन्छ । ऊ पुर्खाअरूका अनुकरण गर्न लायक काम देखेर ज्ञान आर्जन गर्दछ । किताबअरू पढेर, कुराकानी सुनेर, आफूले नै परीक्षण गरेर र वस्तुअरूको निरीक्षण गरेर धेरै जान्दछ । ऊ किरा, पशु र चराचुरुङ्गीबाट पनि सिक्दछ । कमिलाअरू निरन्तर परिश्रम गर्दछन् । तिनीअरूबाट मानिस श्रमको गौरव जान्दछ । कुकुरले घरको सुरक्षा गर्दछ । यो मालिकको भक्त पनि हुन्छ । सधैँ आफ्नो कर्तव्यको पालन गर्दछ । मानिसले यसबाट कर्तव्य पालनको शिक्षा लिन्छ । मौरीअरू समूहमा मिलेरे मह जम्मा गर्दछन् । यिनीअरूबाट मानिसले समूहमा गरिने

कामको फाइदाबारे जान्दछ । रुखले पात, फूल, फल र काठ अरूको उपयोगका लागि दिन्छ । यसबाट मानिसले परोपकारको शिक्षा प्राप्त गर्दछ । फूलले सुन्दरता र सुगन्ध फैलाउँछ । मानिसले पनि आफ्नो गौरव बढाउनका लागि कीर्ति वा नाम चलाउनुपर्ने शिक्षा फूलबाट लिन्छ । त्यसैले जीवनमा जुनकुनै पनि विषयबाट ज्ञान लिनुपर्छ ।

७. अधस्तनं पद्यं तस्य भावार्थं च पठित्वा सज्जनदुर्जनयोः भेदं स्वभाषया लिखत ।

नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः ।
अन्ये बदरिकाकारा बहिरेव मनोहराः ॥

भावार्थः - नारिकेलफलं बहिः कठोरं भवति । अन्तःभागे तु कोमलं मधुरं च भवति । सज्जनाः नारिकेलफलसदृशाः भवन्ति । ते बहिः कठोराः कुरूपाश्च भवन्ति चेत् अन्ततः नम्राः सुन्दराश्च भवन्ति । दुर्जनास्तु बदरिकफलसमानाः भवन्ति । बदरिकफलं बाह्यभागे मधुरं कोमलं च भवति परन्तु अन्तः कठोरं भवति । दुर्जनाः अपि दर्शने सरलाः मनोहराः च भवन्ति परं ते अन्येषां हितं न कुर्वन्ति । अतः साधुसङ्गतिः कर्तव्या ।

अर्थ - नरिवल बाहिर साह्रो हुन्छ । भित्र चाहिँ नरम र मिठो हुन्छ । सज्जनअरू नरिवलजस्तै हुन्छन् । तिनीअरू बाहिर कठोर र कुरुप हुन्छन् भने भित्रबाट नरम र सुन्दर हुन्छन् । दुर्जनअरू चाहिँ बयरको फलजस्ता हुन्छन् । बयर बाहिरपट्टि मिठो र नरम हुन्छ तर भित्र साह्रो हुन्छ । दुर्जनअरू पनि हेर्दा सरल र सुन्दर हुन्छन् तर तिनीअरू अरूको भलो गर्दैनन् । त्यसैले साधुअरूको सङ्गति हितकर हुन्छ र गर्नुपर्छ ।

८. पाठस्य तृतीयं श्लोकं शुद्धतया विलिख्य 'दानम्' इति विषये एकम् अनुच्छेदं लिखत ।

## व्याकरणानुशीलनम्

१. अधस्तनानि वाक्यानि पठित्वा रेखाङ्कितपदानाम् अर्थ स्वभाषया शिक्षकसाहाय्येन लिखत

(क) परह्यः मातुलः अस्माकं गृहम् आगच्छत् ।

(ख) अहं ह्यः पितृव्यस्य गृहम् अगच्छम् ।

(ग) अनुजः अद्य वस्त्रं प्रक्षालयति ।

(घ) श्वः वर्षा भविष्यति ।

(ङ) परश्वः विद्यालयः अवकाशं प्रदास्यति ।

(च) अहम् अधुना परीक्षायै पठामि ।

(छ) त्वं कदा भ्रमिष्यसि ?

(ज) यदा वर्षा भविष्यति तदा कृषकाः क्षेत्रं गमिष्यन्ति ।

(झ) साम्प्रतं विकासकार्यम् अवरुद्धम् अस्ति ।

(ञ) अकस्मात्/हठात् वने व्याघ्रः आगच्छत् ।

## २. अधस्तनानि पदानि प्रयुज्य वाक्यानि रचयत

प्रपरह्यः, अद्य, परश्वः, तदा, कदाचित्, पुरा, कदा, अधुना, यदा, साम्प्रतम्, सायम्, प्रातः, अहर्निशम् ।

## ३. सोदाहरणम् अनुनासिकसन्धिनियमान् पठत

अनुनासिकसन्धिः

क/ख/ग/घ + अनुनासिकः = ङ्

च/छ/ज/झ + अनुनासिकः = ञ्

ट/ठ/ड/ढ + अनुनासिकः = ण्

त/थ/द/ध + अनुनासिकः = न्

प/फ/ब/भ + अनुनासिकः = म्

उदाहरणम्

तद्+मे = तन्मे,

धिक्+मूर्खम् = धिङ्मूर्खम्,

तद्+मयम्=तन्मयम्,

ग्रामाद्+नयति = ग्रामान्नयति,

तद्+मात्रम्=तन्मात्रम् ,

चित्+मात्रम्=चिन्मात्रम् ।

## ४. सन्धिगतं रूपं लिखत

षड्+मासाः ..............

अब्+मयम् .............

किञ्चिद्+न ............

त्वक्+मलम् ...............

जगत्+नाथः .............

५. सन्धिविच्छेदं कुरुत

एतन्मुरारिः .....................

प्राङ्मुखः .....................

अम्मात्रम् .....................

तन्नेत्रयोः .....................

प्रावृण्न .....................

## रचनात्मकं कार्यम्

१. वन्दनं पठित्वा तालिकां निर्माय नामानि लिखत

सरस्वती मया दृष्टा वीणापुस्तकधारिणी ।
हंसवाहनसंयुक्ता विद्यादानं करोतु मे ॥
प्रथमं भारती नाम द्वितीयञ्च सरस्वती ।
तृतीयं शारदादेवी चतुर्थं हंसवाहिनी ॥
पञ्चमं तु जगन्माता षष्ठं वागीश्वरी तथा ।
सप्तमं चैव कौमारी, अष्टमं वरदायिनी ॥
नवमं बुद्धिदात्री च दशमं ब्रह्मचारिणी ।
एकादशं चन्द्रघण्टा द्वादशं भुवनेश्वरी ॥
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ।
जिह्वाग्रे वसते तस्य ब्रह्मरूपा सरस्वती ॥

| क्रमः | सरस्वत्याः नामानि |
|---|---|
| प्रथमम्<br>.......... | भारती<br>........... |

२. उपरि प्रदत्तं सरस्वतीवन्दनं कर्गजपट्टे लिखित्वा सज्जीकृत्य कक्षाकोष्ठस्य भित्तौ संश्लेषयत ।

३. मञ्जूषायाः साहाय्येन अधस्तनं चित्रं पञ्चभिः वाक्यैः वर्णयत

चित्रनिर्देश

हरियो विशाल खेलमैदान । खेलाडीहरू फुटबल खेलिरहेका । दर्शकहरू मैदानको वरिपरि बसेर हेरिरहेका । एउटा खेलाडी मैदानमा पछारिएको ।

यथा–

(क) अत्र विशालं क्रीडाक्षेत्रम् अस्ति ।

## मञ्जूषा

| |
|---|
| क्रीडकाः, दर्शकाः, परितः, क्रीडाक्षेत्रम्, उपविष्टाः, चरणकन्दुकेन, विशालम्, एकः क्रीडकः, क्रीडाक्षेत्रे, पतितः, सर्वे, प्रसन्नाः, हरितम्, स्वच्छम्, सुन्दरम् |

## श्रवणपाठः

वैज्ञानिकैः कृतेभ्यः आविष्कारेभ्यः वर्तमानं मानवजीवनं सरलं सौविध्यमयं च जातम् । विज्ञानस्य सम्प्रयोगात् मानवानां कृते पृथिव्याः सर्वाणि वस्तूनि सुप्राप्यानि अभवन् । विज्ञानं सर्वविधं सुखं मानवेभ्यः अददात् । वैज्ञानिकवस्तूनां विकासेन संसारः शास्त्रेषु वर्णितः स्वर्गः इव सुन्दरः दृश्यते । इदानी सर्वेऽपि मानवाः सुखिनः सन्ति । वयं पक्षी इव आकाशे उड्डयितुं शक्नुमः; मीन इव मध्येसागरं विहर्तुं शक्नुमः । एवं च ग्रहान्तरं गन्तुं च शक्नुमः । एतत् सर्वं विज्ञानशक्त्या सम्भवं जातम् ।

प्राचीनकाले जनाः यद् असम्भवं वदन्ति स्म, तत् अधुना सर्वं सम्भवं जातम् । विज्ञानस्य अनुपस्थितिः इदानी कुत्रापि न दृश्यते । अधुना कृषिक्षेत्रे वीजानां वपनम्, पाषाणधूलिकणानां परिष्कारः, भूसेचनम्, भूकर्षणं च यन्त्रमाध्यमेन कर्तुं शक्यते । वातानुकूलनसाधनम् अपि अस्माभिः प्राप्तं विज्ञानस्य वरदानम् एव अस्ति । उपग्रहसाहाय्येन सञ्चारसाधनानि सुलभानि अभवन् । चिकित्सापद्धतौ तु महान् क्रान्तिः समागता । इदानीम् अन्यस्मात् अन्यशरीरेषु नेत्रप्लीहादीनाम् अङ्गानां प्रत्यारोपणं कर्तुं शक्यते । विज्ञानं कल्पवृक्षः इव मानवानां प्राप्तम् अस्ति । अतः दुरुपयोगं त्यक्त्वा वयं एतस्य सर्वदा सदुपयोगं कुर्याम ।

## भाषानुवाद

वैज्ञानकहरूले गरेको आविष्कारका कारण अहिलेको मानवजीवन सरल र सुविधासम्पन्न भएको छ । विज्ञानको प्रयोगका कारण मानिसका लागि पृथिवीका सबै वस्तुहरू प्राप्य भए । विज्ञानले सबै प्रकारको सुख मानिसलाई दियो । वैज्ञानिक वस्तुहरूको विकासले गर्दा संसार शास्त्रमा वर्णित स्वर्ग झैं सुन्दर देखिन्छ । अहिले सबै मानिसहरू सुखी छन् । हामी पन्छी जस्तै आकाशमा उड्न सक्छौं; माछा जस्तै समुद्रको बिचमा पौडन सक्छौं । त्यसै गरी अर्को ग्रहमा जान सक्छौं । यो सबै विज्ञानले गर्दा सम्भव भएको हो ।

प्रानीनकालमा मानिसहरू जुन कुरालाई असम्भव भन्दथे, त्यो अहिले सबै सम्भव भएको छ । विज्ञान नपुगेको ठाउँ अहिले कहीँ पनि देखिँदैन । अहिले कृषिक्षेत्रमा बिउ रोप्ने, ढुङ्गा र धुलोको कणहरू सफा गर्ने, जमिनमा सिँचाइ गर्ने तथा जमिन खन्ने काम यन्त्रको माध्यमबाट गर्न सकिन्छ । वातानुकूलनको साधन पनि हामीहरूले पाएको विज्ञानको वरदान नै हो । उपग्रहको सहायताले सञ्चारका साधनहरू सुलभ भए । चिकित्साको क्षेत्रमा पनि महान् क्रान्ति आयो । अहिले एक व्यक्तिबाट अन्य व्यक्तिको शरीरमा आँखा, कलेजो आदि अङ्गहरूको प्रत्यारोपण गर्न सकिन्छ । विज्ञान कल्पवृक्ष झैं मानवलाई प्राप्त छ । त्यसैले दुरुपयोग नगरी हामी यसको सदुपयोग गरौं ।

दशमः पाठ

# गुरुत्वाकर्षणस्य प्रतिपादकः

(अश्लेषा दशम्यां कक्षायां पठति । तस्य भगिनी विदुषी सप्तम्यां कक्षायां पठति । प्रातः नित्यकर्म समाप्य ते किञ्चित् पठतः । अश्लेषा भगिनी अबुद्धान् पाठान् बोधयितुम् प्रयतते । तयोः अद्यतनी वार्ता एतादृशी अस्ति ।)

अश्लेषा - विदुषि ! ह्यः विज्ञानविषये त्वया किम् अधीतम् ?

विदुषी - गुरुः अस्मान् गुरुत्वाकर्षणस्य विषयम् अध्यापयामास ।

अश्लेषा - तर्हि वदतु, गुरुत्वाकर्षणस्य सिद्धान्तं कः प्रतिपादितवान् ?

विदुषी- तत् कः न जानाति ? न्यूटनः प्रतिपादितवान् ।

अश्लेषा- तत् तु पाश्चात्त्याः वदन्ति । परन्तु सर्वप्रथमं गुरुत्वाकर्षणस्य चर्चा तेन न विहिता ।

विदुषी- तर्हि न्यूटनात् पूर्वं गुरुत्वाकर्षणस्य चर्चा कः विहितवान् ?

अश्लेषा- भास्कराचार्यस्य सिद्धान्तशिरोमणिग्रन्थे तत्सम्बन्धिनी चर्चा दृश्यते । तत्र भास्कराचार्येण आकाशीयपिण्डानां गुरुत्वाकर्षणविषयः सूचितः अस्ति ।

विदुषी- तर्हि गुरुत्वाकर्षणस्य क्षेत्रे न्यूटनस्य योगदानम् एव नास्ति ?

अश्लेषा- अस्ति । कथं नास्ति ? न्यूटनस्य कर्मणा पौरस्त्यक्षेत्रे अपि गुरुत्वाकर्षणविषये पुनर्जागरणं जातम् इति निश्चयेन वक्तुं शक्यते ।

विदुषी- भास्कराचार्यः न्यूटनस्य पूर्ववर्ती आसीत् इति किं प्रमाणम् ?

अश्लेषा- त्वं कथय । न्यूटनः कदा सञ्जातः ? तस्य मातापितरौ कौ ? कः तं पालितवान् ?

विदुषी- न्यूटनः प्रसिद्धः वैज्ञानिकः अस्ति । अस्य जन्म संयुक्ताधिराज्ये ईशायाः १६४२ तमे संवत्सरे अभवत् । जन्मसमयात् प्रागेव तस्य पिता दिवङ्गतः । किञ्चित् कालानन्तरमेव माता द्वितीयविवाहं कृतवती । मातामहः अस्य पालनं पोषणं च विहितवान् ।

अश्लेषा- भास्कराचार्यस्तु १२०७ वैक्रमाब्दे एव गुरुत्वाकर्षणविषये लिखितवान् । तस्य पुस्तकम् अद्यापि प्राप्यते । न्यूटनस्तु पश्चात् जातः ।

विदुषी- अस्तु तर्हि । गुरुत्वाकर्षणविषये स्पष्टं कथयतु । ह्यः अहम् स्पष्टतया न ज्ञातवती ।

अश्लेषा- आकाशीयपिण्डेषु आकर्षणशक्तिर्भवति । सा एव गुरुत्वाकर्षणशक्तिः इति उच्यते । पृथिव्याः आकर्षणशक्तिस्तु गुरुत्वबलम् इति न्यूटनः प्रतिपादितवान् । आकाशीयपिण्डेषु अपि स्थूलपिण्डस्य आकर्षणशक्तिः लघुपिण्डस्य अपेक्षया अधिका भवति । सर्वे आकाशीयपिण्डाः स्वाकर्षणशक्त्या स्वाक्षे भ्रमन्ति ।

विदुषी- आम् आम् । अतः पृथ्व्यादयः लघुपिण्डाः सूर्यादीनां परिक्रमणं कुर्वन्ति । एतत् सत्यम् अस्ति ?

अश्लेषा- शोभनम् । तदेव सत्यम् अस्ति ।

विदुषी- मम लेखनाभ्यासः अपि अवशिष्टः अस्ति । इदानीम् अहम् लेखामि ।

अश्लेषा- अस्तु तावत् । मम अपि गृहकार्य अवशिष्टम् अस्ति । स्वकीयं पठनं कुर्वः ।

(ते स्वाध्ययनं कुरुतः ।)

(अश्लेषा दश कक्षामा पढ्छिन् । उनकी बहिनी विदुषी सात कक्षामा पढ्छिन् । बिहानको नित्यकर्म सकेर उनीअरू केही समय पढ्छन् । अश्लेषा बहिनीले नबुझेका पाठअरू बुझाउने प्रयास गर्छिन् । उनीअरूको आजको कुराकानी यस्तो छ ।)

अश्लेषा- विदुषी तिमीले हिजो विज्ञानमा के पढ्यौ ?

विदुषी- गुरुले हामीलाई गुरुत्वाकर्षणका बारेमा पढाउनुभयो ।

अश्लेषा- उसो भए भन, गुरुत्वाकर्षणको सिद्धान्त कसले प्रतिपादन गर्यो ?

विदुषी- त्यति कसलाई थाहा छैन र ? न्यूटनले त हो नि ।

अश्लेषा- त्यस्तो त पश्चिमाअरूले भन्छन् । तर सबैभन्दा पहिले गुरुत्वाकर्षणको चर्चा उनले गरेका होइनन् ।

विदुषी- न्यूटनभन्दा पहिले गुरुत्वाकर्षणको चर्चा कसले गर्यो त ?

अश्लेषा- भास्कराचार्यको सिद्धान्तशिरोमणि ग्रन्थमा त्यसको चर्चा छ । त्यहाँ भास्कराचार्यले आकाशीय पिण्डअरूको गुरुत्वाकर्षणका विषयमा सङ्केत गरेका छन् ।

विदुषी- त्यसो भए गुरुत्वाकर्षणका विषयमा न्यूटनको योगदान नै छैन त ?

अश्लेषा- छ । किन छैन ? न्यूटनको कामले पूर्वीय क्षेत्रमा पनि गुरुत्वाकर्षणको विषयमा पुनर्जागरण भयो भन्न सकिन्छ ।

विदुषी- भास्कराचार्य न्यूटनभन्दा पहिलेका हुन् भन्ने के प्रमाण छ ?

अश्लेषा- तिमी भन । न्यूटन कहिले जन्मे ? उनका बुबाआमा को थिए ? उनलाई कसले पाल्यो ?

विदुषी- न्यूटन प्रसिद्ध वैज्ञानिक हुन् । उनको जन्म संयुक्त अधिराज्य अमेरिकामा सन् १६४२ मा भयो । उनी जन्मिनुभन्दा पहिले नै बुबाको मृत्यु भयो । केही समय पछि उनकी आमाले दोस्रो विवाह गरिन् । मामाले उनको पालनपोषण गरे ।

अश्लेषा- भास्काराचार्यले त विक्रमसंवत् १२०७ मा नै गुरुत्वाकर्षणका विषयमा लेखेका थिए । उनको पुस्तक अहिले पनि पाइन्छ । न्यूटन त पछि जन्मिए ।

विदुषी- ठिक छ त्यसो भए । गुरुत्वाकर्षणको विषयमा अलि व्याख्या गरिदिनुस् न । मैले हिजो राम्रोसँग बुझिनँ ।

अश्लेषा- आकाशका ग्रहअरूमा आकर्षण शक्ति हुन्छ । त्यसैलाई गुरुत्वाकर्षण भनिन्छ । पृथिवीको आकर्षणशक्तिलाई चाहिँ गुरुत्वबल भनिन्छ भनेर न्यूटनले भनेका छन् । आकाशीय पिण्डअरूमा पनि ठूला पिण्डअरूको आकर्षणशक्ति साना पिण्डअरूको अपेक्षामा बढी हुन्छ । सबै आकाशीय पिण्डअरू आफ्नो आकर्षण शक्तिले गर्दा आफ्नो अक्षमा घुम्छन् ।

विदुषी- त्यसैले पृथ्वी आदि साना ग्रहअरू सूर्य आदि ठूला ग्रहअरूको परिक्रमा गर्दछन् । होइन त ? अश्लेषा- हो हो ।

विदुषी- मेरो गृहकार्य लेख्नै बाँकी छ । अब म लेख्छु ।

अश्लेषा- ठिक छ । मेरो पनि गृहकार्य बाँकी छ । अब आ आफ्नो पढौँ ।

(उनीअरू आ आफ्नो पढ्न थाल्छन् ।)

# मातुः प्रयासः

जोनोपनामधेयः बेनः कारसनः हप्किन्सचिकित्सालयस्य निर्देशकः अस्ति । सः याल-विश्वविद्यालये छात्रवृत्तिं सम्प्राप्य प्रसिद्धः चिकित्सकः सञ्जातः । परन्तु यावत् पञ्चम्यां कक्षायां पठति स्म, तावत् असौ इत्थं भविष्यति इति न कोऽपि विश्वसिति स्म । तत्र असौ अर्धवार्षिक्यां परीक्षायां प्रायः विषयेषु अनुत्तीर्णः आसीत् । शून्यात् विश्वविद्यालयस्य छात्रवृत्तेः प्राप्तिपर्यन्तं कः प्रेरितवान् ? अस्य प्रश्नस्य उत्तरे बेनः स्वस्य स्वानुजस्य च सहयोगाय मातुः योगदानं स्मरति । मातुः युक्त्या तस्य जीवनं सर्वथा पर्यवर्तत ।

जीवनस्य अतीतं स्मरन् कारसनः वदति- मम माता तृतीयकक्षापर्यन्तम् एव पठितवती । अतः सा लज्जाम् अनुभवति स्म । सा अन्येषां गृहेषु कार्यं करोति स्म । इत्थं जीवनं दुष्करं भवति इति, सा जानाति स्म । सा प्रतिदिनं मम अनुजस्य च दुरवस्थां पश्यति स्म । सा स्वपुत्रौ जीवने शिक्षायाः महत्त्वं बोधयितुं किं कर्तुं शक्नोति स्म ? यतः तौ भविष्यविषये निर्णेतुं समर्थौ भवेताम् । सा किंकर्तव्यविमूढा आसीत् । अतः यथोचितस्य मार्गस्य निर्देशनाय सा भगवन्तं प्रार्थयति स्म ।

ईश्वरः मातरं प्रेरितवान् । परन्तु तस्याः प्रेरणायाम् आवयोः विश्वासः न आसीत् । सा प्रेरणा दूरदर्शनस्य दर्शनाय अवरोधः आसीत् । सा प्रतिसप्ताहं दूरदर्शनस्य द्वित्राणाम् एव कार्यक्रमाणाम् दर्शनाय आज्ञां ददौ । अवशिष्टेषु समयेषु सार्वजनिकात् पुस्तकालयात् पुस्तकानि गृहीत्वा पठितव्यम् आसीत् ।

अस्याः व्यवस्थायाः कारणात् अहम् अत्यन्तः खिन्नः आसम् । मम सखायः बहिः विचरन्ति स्म । मातुः सख्यः आगत्य वदन्ति स्म- "बालकान् भृशं पाठयन् गृहे एव स्थापनं व्यर्थम् इति ।" कदाचित् अहं वदामि स्म-"तासां वचनम् अपि शृणोतु ।" परन्तु सा कदापि न शृणोति स्म । पठनस्य विकल्पः एव न आसीत् ।

यदा अहम् एतां कथां श्रावयामि, जनाः पृच्छन्ति- "कथं भवतः माता तानि पुस्तकानि पाठयितुं समर्था अभवत् ?" अहम् तु पाठयितुम् असमर्था एव न, अपि तु दूरदर्शनस्य दर्शनम् अपि निवारयितुं न शक्नोमि ।

तेषां वचः श्रुत्वा अहम् ईषत् हसामि । अहं कथयामि- पुरा गृहम् अभिभावकाधीनं भवति स्म । ते सन्ततिभिः सह गृहसञ्चालनविषये विचारविनिमयं न कुर्वन्ति स्म । अद्यत्वे एतत् सर्वं विस्मयजनकं प्रतिभाति ।

किम् अपि स्यात्, अहं पठितुम् आरब्धवान् । किं पठितव्यम् इति माता न निरणयत्, अयं सुन्दरः पक्षः आसीत् । महयं पशवः रोचन्ते स्म । अहं सार्वजनिकस्य पुस्तकालयस्य पशुसम्बन्धि प्रत्येकं पुस्तकम् अपठम् । तत्पश्चात् वनस्पतिविषयकानि पुस्तकानि पठितवान् । पश्चात् अहं पाषाणविषयकानि पुस्तकानि पठितुम् आरब्धवान् । यतो हि अस्माकं गृहं रेलमार्गस्य समीपे एव नगरस्य कोणे आसीत् । रेलमार्गस्य निकटे अनेके पाषाणाः आसन् । अहं पाषाणानां खण्डानि सम्मेल्य गृहं नीत्वा भूगर्भशास्त्रीयाणां पुस्तकानां बहिर्भागे स्थापयामि स्म । यावत् प्रत्येकं पाषाणानां नामानि, तेषाम् उत्पत्तिस्थलानि च परिचेतुं न शक्नोमि स्म तावत् अहं पुनः पुनः पठामि स्म ।

मासाः व्यतीताः । अहं पञ्चम्याम् एव कक्षायाम् आसम् । मन्दमतिः एव आसम् । मम अध्ययनस्य योजनां कोऽपि न जानाति स्म ।

एकदा कक्षायाम् विज्ञानविषयस्य शिक्षकः प्रविवेश । तस्य हस्तयोः विशालं पाषाणम् आसीत् । सः पप्रच्छ- एतत् किम् अस्ति ?

अहम् उत्तराय कदापि हस्तं न उत्थापितवान् । विज्ञाः चतुराश्च विद्यार्थिनः हस्तम् उत्थापयिष्यन्ति, इति सञ्चिन्त्य प्रतीक्षाञ्चक्रे । न कोऽपि अग्रेसरः अभूत् । अहम् व्यचारयम्- अयं महान् अवसरः अस्ति । अहं हस्तम् उपरि अकरवम् । सर्वे निर्निमेषं माम् अपश्यन् । केचन मुखामुखं कर्तुं आरब्धवन्तः । केचन कर्णेमुखाः अभूवन् । ते अकथयन् - "पश्य पश्य कारसनः हस्तम् उपरि चकार । इदम् रोमाञ्चकं क्षणम् अस्ति । इति ।" तेषु धैर्यं न आसीत् । शिक्षकः विस्मितः सञ्जातः । स कथयामास- बेन ?

अहम् अवदम्- महाशय, अस्य पाषाणस्य नाम अब्सिडियनम् अस्ति । कक्षायाः सर्वे स्तब्धाः सञ्जाताः । इदम् श्रवणाय मनोहारि आसीत् । समुचितम् अनुचितं वा किम् इति कस्यापि बुद्धिविषयं न आसीत् । सर्वे विद्यार्थिनः किंकर्तव्यविमूढा इव सञ्जाताः । अन्त्ये शिक्षकः कक्षायाः नीरवताम् भञ्जयन् अवोचत्- समीचीनम्, अस्य नाम अब्सिडियनम् एव अस्ति ।

अहम् वर्णयितुम् आरब्धवान् - अयं पाषाणः ज्वालामुख्याः विष्फोटपश्चात् निर्मितिपथम् आयाति । जलोत्तीर्णाः (लाभा) पानीयं तापयन्ति । पश्चात् पानीयस्य शीतलतायाः प्रक्रिया आरभ्यते । तत्र तत्त्वानि एकत्रितानि भवन्ति । वायुः वेगेन वहति । उपरितनः भागः चकास्ति । तत्पश्चात्...।

तदानीम् अहम् अपश्यम्- विस्मिताः ते सर्वे निर्निमेषं माम् एव पश्यन्तः सन्ति इति । मन्दबुद्धेः मुखात् भूगर्भविषयकं रहस्यम् उद्घाटितं भविष्यति इति विश्वसनीयः विषयः न आसीत् । अहम् अनुभूतवान्, अहम् कक्षायाः सर्वोपरि विस्मितः आसम् । इतः परं मन्दबुद्धिः न भविष्यामि इति ।

अहं विचारितवान्- "कारसन ! त्वया पठितानि पुस्तकानि एव अस्य उत्तरस्य कारणानि सन्ति । त्वया पठितानां विज्ञान-गणित-इतिहास-भूगोल-सामाजिक-विषयाणां का वार्ता ? ये त्वां मन्दबुद्धिं विचारयन्ति त्वम् तदधिकं ज्ञातुं न शक्नोषि ?" अहं हस्तयोः आगतं पुस्तकं पठनं विना न स्थापयामि स्म । पञ्चानाम् अपि निमेषाणाम् उपयोगं पुस्तकपठनेन करोमि स्म । प्रतीक्षालये पुस्तकम् एव पठामि स्म ।

सार्धवर्षपश्चात् अहम् कक्षायाः सर्वोपरि स्थाने आसम्, यत्राहं पूर्व हास्यभाजनः मन्दमतिश्च आसम् । सप्तम्यां कक्षायां सखायः मां पृच्छन्ति स्म- बेन ! अस्याः समस्यायाः समाधानं किम् ? इति । अहं सर्वान् शिक्षयामि स्म । कक्षायाः सर्वोच्चैः स्थाने सर्वनीचैः स्थाने वा मम मतिः एका एव आसीत् । भिन्नता इयमेव आसीत्, पञ्चमकक्षापर्यन्तम् अहम् आत्मानं मन्दबुद्धिवन्तं मेने । अतः अहं तादृशम् एव फलं प्राप्तवान् । सप्तम्यां कक्षायाम् आत्मानं चतुरं कुशाग्रबुद्धिं च अनुभूतवान् । तदनुकूलं फलं च प्राप्तवान् । अतः उच्यते संस्कृते-

यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।

अतः आत्मविश्वासः कर्तव्यः । सृष्टिः सदैव दृष्ट्यनुसारिणी भवती । अतः विश्वस्य दर्शनाय शुभदृष्टेः विकासः कर्तव्यः । अस्माकं मस्तिष्कस्य अपरिमितं सामर्थ्यं ज्ञातव्यम् ।

## आमाको प्रयास

बेन कारसन जोन हप्किन्स अस्पतालका निर्देशक हुन् । तर जब उनी पाँच कक्षामा पढ्थे त्यस बेला यिनी याले विश्वविद्यालयमा छात्रवृत्ति पाएर प्रसिद्ध चिकित्सक होलान् भनेर कसैले सोचेको थिएन । पाँच कक्षाको अर्धवार्षिक परीक्षामा यिनी लगभग सबै विषयमा अनुत्तीर्ण भएका थिए । शून्यको तहबाट प्रतिष्ठित विश्वविद्यालयको छात्रवृत्तिको तहसम्म उनलाई कसले पुऱ्यायो ? यस प्रश्नका सम्बन्धमा बेन कारसनले आफ" र भाइको सहयोगका लागि आमाले अपनाएको जुक्तिलाई निम्नलिखित ढङ्गबाट उत्तर दिएका

छन् । आमाको उत्तरले उनको जीवनलाई सधैँका लागि परिवर्तन गरिदियो ।

जीवनको अतीत खोतल्दै बेन कारसन भन्दछन्, “मेरी आमा तीन कक्षासम्मको मात्र शिक्षा पाएकाले लज्जित हुनुहुन्थ्यो । उहाँ अरूको घरमा सरसफाइ गर्नेजस्ता दुईतीन थरी काम गर्नुहुन्थ्यो । आमालाई यसरी जीवन धान्न कठिन छ भन्ने थाहा थियो । मेरो र भाइको अवस्था पनि बिग्रिँदै गएको देखिरहनुभएको थियो । के गर्ने, कसो गर्ने उहाँलाई केही थाहा थिएन । त्यसैले उहाँले ईश्वरसँग प्रार्थना गर्दै आफूलाई ज्ञानबुद्धि दिन आग्रह गर्नुभयो । उहाँलेआफ्ना जबान छोराहरूलाई शिक्षाको महत्त्व बुझाउन के गर्न सक्नुहुन्थ्यो, त्यो सोध्नुभयो जसबाट उनीहरू आफ्नो भविष्यबारे निर्णय गर्न सकून् ।

ईश्वरले उहाँलाई बुद्धि दिए तापनि म र मेरो भाइ यो नै सबै बुद्धिमानी हो भन्ने ठान्दैनथ्यौँ । त्यो बुद्धिमानी भनेको टेलिभिजन बन्द गर्नु थियो । त्यस बेलादेखि उहाँले हप्तामा हामीले मन पराएका दुई वा तीनओटा टेलिभिजन कार्यक्रम मात्र हेर्ने अनुमति दिनुभयो । हप्तामा बाँकी सम्पूर्ण समयमा हामीले डेट्रोइट सार्वजनिक पुस्तकालयबाट ल्याएर दुईओटा पुस्तक पढ्नुपर्थ्यो ।

यो नयाँ व्यवस्थाबाट म अत्यन्तै बेखुसी थिएँ । मेरा सबै साथी प्रशस्त समय निकालेर बाहिर हिँड्थे । आमाका साथीहरू आएर भन्ने गरेको सम्झन्छु , “तपाईं केटाहरूलाई घरमा पढेको पढै गरेर राख्न सक्नुहुन्न ।” कहिलेकाहीँ म यो कुरा सुन्थेँ र भन्थेँ ,“उहाँहरूका कुरा सुन्नुहोस् त आमा !” तर उहाँ कहिल्यै सुन्नुहुन्नथ्यो । हामीलाई ती पुस्तक नपढी धरै थिएन ।

कहिलेकाहीँ जब म यो कथा भन्छु तब मानिसहरू मेरो पछि लाग्छन् र सोध्छन्, “तपाईंकी आमाले तपाईंलाई ती पुस्तक पढाउन कसरी सक्नुभयो ?, म त मेरा बच्चालाई न पढाउन सक्छु न त कहिल्यै टेलिभिजन बन्द गराउन सक्छु ।” यो कुरा सुन्दा मलाई अलिअलि हाँस उठ्छ । भन्छु, “हेर्नुहोस्, पहिले बाबुआमाले घर चलाउँथे । उनीहरूले बच्चाबाट अनुमति लिनुपर्दैनथ्यो ।” आजभोलि धेरै मानिसलाई यो कुरा अनौठो जस्तो लाग्छ ।

जे होस्, मैले पढाइ सुरु गरेँ । राम्रो पक्ष के थियो भने हामीले के पढ्नुपर्छ भनेर आमाले निर्णय गर्नुभएन । म जनावर मन पराउँथेँ, त्यसैले मैले डेट्रोइट सार्वजनिक पुस्तकालयका जनावरसम्बन्धी प्रत्येक पुस्तक पढेँ । ती सकेपछि बोटविरुवासम्बन्धी

पुस्तक पढ्न थालेँ । ती पनि सकेपछि म पत्थरबारे पढ्न थालेँ किनभने हामी रेलमार्ग नजिकको सहरको एउटा सानो भागमा बस्थ्यौँ । रेलमार्गको छेउछाउमा प्रशस्त पत्थर थिए । म पत्थरका सानासाना बाकस जम्मा गर्थें र घर लगेर भूगर्भशास्त्रसम्बन्धी पुस्तकको बाहिरपट्टि राख्थेँ । प्रत्येक पत्थरको नाम, बनावट र उत्पत्तिस्थलको पहिचान भन्न र बुझ्न सक्ने नहोउन्जेल म पढिरहन्थेँ । महिनौ बिते । म पाँच कक्षामै थिएँ । कक्षाको अझै एउटा बोधो थिएँ । मेरो पढाइको योजना कसैलाई थाहा थिएन ।

एक दिन पाँच कक्षाका विज्ञान शिक्षक आए र हातमा एउटा ठुलो चम्किलो पत्थर उठाए । उनले भने, “कसैले मलाई भन्न सक्छ ? यो के हो?”

मैले कहिल्यै हात उठाइनँ । उत्तर पनि कहिल्यै दिइनँ । जान्ने र फुर्तिला बच्चामध्ये कसैले हात उठाउला कि भनेर पर्खिरहेँ । तीमध्ये कसैले पनि उठाएन । त्यसपछि बहिरा बच्चामध्ये कसैले हात उठाउँछ कि त भनेर पर्खें । तिनमा पनि कसैले उठाएन । अनि मैले सोचेँ, “यो मेरो ठुलो मौका हो ।” मैले हात उठाएँ । सबै जना मतिर हेर्न थाले । कक्षाका कोहीकोही साथी मलाई घोचपेच गर्न र आपसमा कानेखुसी गर्न थाले,“हेर हेर ! कारसनले हात उठायो । यो त रमाइलो हुन लाग्यो ।” तिनीहरूमा के हुँदै छ भनेर हेर्ने धैर्य थिएन । शिक्षक छक्क परे । उनले भने, “बेन्जामिन ?”

मैले भनेँ, “ज्याक महाशय, त्यो ‘अब्सिडियन’ नाम गरेको पत्थर हो ।” कक्षामा सन्नाटा छायो । किनभने यो सुन्नमा राम्रो थियो । तर यो ठिक वा बेठिक के थियो, कसैलाई थाहा थिएन । त्यसैले अरू केटाकेटी हाँस्ने हो कि जान्नेबुझ्ने हो, अलमलिए । अन्तमा शिक्षकले सन्नाटा तोड्दै भने, “ठिक छ । यो ‘अब्सिडियन’ हो ।”

म व्याख्या गर्न थालेँ , “‘अब्सिडियन’ ज्वालामुखी विस्फोट भएपछि निर्मित हुन्छ । पानीमा तैरिएका लाभाले पानीलाई तताएपछि चिसिने प्रक्रिया सुरु हुन्छ । त्यहाँ तत्त्वहरू एकत्रित हुन्छन् । हावा तीव्र गतिमा बाहिरिन्छ । सतहको भाग चम्किन्छ । त्यसपछि ... । ”

मलाई तत्काल सबै जना छक्क परेर एक टकले मलाई नै हेरिहेका छन् भन्ने लाग्यो ।तिनीहरूलाई एउटा बोधो मानिसका मुखबाट भूगर्भशास्त्रसम्बन्धी सम्पूर्ण जानकारी आउँछ भन्ने विश्वास नै लागेको थिएन । तर मलाई लाग्यो, म कक्षाको सम्भवतः सबैभन्दा आश्चर्यजनक व्यक्ति बनेँ, किनभने त्यो क्षण मलाई अब बोधो रहिनँ

भन्ने लाग्यो ।

मैले आफैँ विचार गरेँ , “कारसन, तैँले पढेका पुस्तकहरू नै तैँले उत्तर दिन सक्नुको कारण हो । तैँले पढेका विज्ञान, गणित, इतिहास, भूगोल, सामाजिक अध्ययन विषयका कुरा के हुन् ? जसले तँलाई जिस्क्याउँछन् र बोधो भन्छन् तीभन्दा बढी तँ जान्न सक्तैनस् र ?” म निश्चित रूपमा के कुरा स्वीकार गर्छु भने मेरो हातमा परेको पुस्तक नपढी म छोड्दिनथेँ । पाँच मिनेट समय भए पनि पुस्तक नै पढ्ने, शौचालयमा बस्दा पनि पुस्तक नै पढ्ने । बस पर्खिंदा पनि पुस्तक नै पढिरहने ।

डेड वर्षभित्र म त्यही कक्षाको उच्चतम स्थानमा पुगेँ जुन कक्षाका साथीहरू मलाई जिस्क्याउने र बोधो भन्ने गर्थे । सातौँ कक्षामा आएर तिनै साथीहरूमसँग सोध्थे ,“ऐ बेनी, यस समस्याको समाधान कसरी गर्छौ ?” म भन्थेँ , “मेरो पाउ पर, ठिटा हो ! जब म तिमीहरूलाई सिकाउँछु ।”

म सायद अलिअलि डराएँ । तर वर्ष बित्तै गएपछि जिस्क्याउनेहरूप्रति पनि मेरो सद्भाव नै रहयो ।

यहाँनेर महत्त्वपूर्ण कुरा के छ भने म कक्षाको सबैभन्दा तल्लो स्थानमा रहँदा र उच्चतम स्थानमा पुग्दा पनि मेरो दिमाग उस्तै रहयो । फरक यति मात्र थियो – पाँच कक्षामा हुँदा मैले बोधो छु भन्ने विचार गरेँ र बोधो भएकै अभिनय गरेँ । मैले बोधो मानिसले पाउने कुरा नै पाएँ । सात कक्षामा पुगेपछि म जान्ने र फुर्तीलो छु भन्ने सोचेँ; त्यस्तै अभिनय गरेँ र तदनुरूप उपलब्धि पनि हासिल गरेँ । त्यसैले संस्कृतमा मन्त्र, तीर्थ, ब्राहमण, देवता, वैद्य र गुरुमा जसले जस्तो विश्वास गर्छ त्यस्तै सफलता पाउँछ भनिएको छ । त्यसैले हामीले आत्मविश्वास गर्नुपर्छ । आफ्नो दृष्टिअनुसारको सृष्टि हुन्छ । त्यसैले संसारलाई हेर्ने सकारात्मक सोचको विकास गर्नुपर्छ । हामीले हाम्रो दिमागको अपरिमित शक्तिलाई चिन्नुपर्छ ।

## शब्दार्थाः

| शब्दः | संस्कृते पर्या | नेपाल्यामर्थः | आङ्गलभाषायामर्थः |
|---|---|---|---|
| चिकित्सालयः | औषधालयः | अस्पताल | Hospital |
| छात्रवृत्तिः | | छात्रवृत्ति | Scholarship |

| | | | |
|---|---|---|---|
| विश्वसिति | विश्वासं करोति | भरोसा गर्छ । | Believe |
| अनुत्तीर्णः | अफलः | अनुत्तीर्ण | Fail |
| पर्यवर्तत । | परिवर्तितं अभवत् | बदलियो । | Changed |
| किंकर्तव्यविमूढा | दिग्भ्रमिता | अलमलमा परेकी | Confused |
| दूरदर्शनम् | | टेलिभिजन | Televesion |
| सार्वजनिकः | | सार्वजनिक | Public |
| विकल्पः | अन्यः उपायः | विकल्पः | Option |
| निवारयितुम् | वरयितुम् | छेक्न | Prohibition |
| विचारविनिमयम् | वार्ता | छलफल | Discussion |
| विस्मयजनकम् | आश्चर्यप्रदम् | छक्क पार्ने | Surprising |
| आरब्धवान् | आरेभे | सुरु गरें | Started |
| पशवः | जन्तवः | जनावरअरू | Animals |
| पषाणः | शिला | पत्थर | Stone |
| प्रतीक्षाञ्चक्रे | प्रतीक्षाम् अकरवम् | पर्खें | Waited |
| नीरवताम् | निःशब्दताम् | शून्यता | Emptiness |
| निर्मितिपथम् आयाति | निर्माणं भवति | बन्छ । | To be made |
| भूगर्भविषयकम् | भूगर्भसम्बन्धिनम् | भूगर्भसँग सम्बन्धित | Geological |
| रहस्यम् | गोप्यः वृत्तान्तः | रहस्य | Secret |
| मन्दबुद्धिः | अल्पमतिः | मूर्खः | Dull |
| निर्निमेषम् | ऋनवरतम् | निरन्तर | Without interruption |
| हास्यभाजनः | हास्यपात्रम् | हाँसोको पात्र | Ridiculous |

| | | | |
|---|---|---|---|
| कुशाग्रबुद्धिः | तीक्ष्णबुद्धिः | चलाख | Clever |
| आत्मविश्वासः | आत्मनः विश्वासः | आत्मविश्वास | Self Confidence |
| सिद्धिः | प्राप्तिः | सफलता | Success |

## अभ्यासः

### श्रवणं भाषणं च

१. कथायाः अनुच्छेदान् एकैकशः उच्चारयत । एकस्य उच्चारणम् अन्ये शृणुत ।

२. शिक्षकस्य साहाय्येन अधस्तनानि पदानि श्रुत्वा शुद्धम् उच्चारयत

किंकर्तव्यविमूढा, भूगर्भशास्त्रीयाणाम्, पर्यवर्तत, अब्सिडियनम्, विष्फोटः ।

३. चित्रं दृष्ट्वा वर्णयत

एकातिर मानिसले काम गरिरहेको र सजिलै गर्न नसकिरहेको जनाउने तस्बिर । अर्कोतिर यन्त्रमानवले त्यही काम गरिरहेको र त्यो सजिलै भइरहेको जनाउने तस्विर । समग्रमा यन्त्रमानवको आविष्कारले जीवन सरल भइरहेको जनाउने तस्विर ।

४. पाठस्य कथां स्वमातृभाषायां कक्षायां श्रावयत ।

५. पाठस्य द्वितीयम् अनुच्छेदं शिक्षकस्य मुखात् शृणुत, अर्थं च विचारयत ।

६. पाठस्य प्रथमम् अनुच्छेदं श्रुत्वा एकवाक्येन उत्तरयत

(क) बेनः कस्य चिकित्सालयस्य निर्देशकः अस्ति ?

(ख) बेनः कस्यां कक्षायां प्रायः विषयेषु अनुत्तीर्णः सञ्जातः ?

(ग) बेनः कं स्मरति ?

(घ) कारसनः कस्मिन् विश्वविद्यालये पठितवान् ?

(ङ) बेनस्य जीवनं कथं पर्यवर्तत ?

७. अनुच्छेदं श्रुत्वा उत्तरं वदत

तिथिः, वासरः, नक्षत्रम्, योगः, करणम्, एतेषां सामूहिकं नाम पञ्चाङ्गमस्ति ।

हिन्दुसंस्कृतौ धार्मिककृत्यानि पञ्चाङ्गाधारेण निर्धार्यन्ते । तिथ्याधारेण चान्द्रमासो गण्यते । धार्मिककार्येषु सर्वत्र चान्द्रमासस्य एव ग्रहणं भवति । एकस्मिन् चान्द्रमासे त्रिंशत्तिथयो भवन्ति । प्रतिपदादि अमान्ताः तिथयः प्रसिद्धाः सन्ति । अमायां चन्द्रसूर्यौ एकस्यामेव दृष्टिरेखायां भवतः । यदा तयोरन्तरं १२$^{0}$ तुल्यं भवति तदा एका तिथिर्जायते । एवं पूर्णिमायां (१५ तिथौ) तयोरन्तरं १८०$^{0}$ तुल्यं भवति । आदित्यादयः सप्तसङ्ख्यका वासराः प्रसिद्धाः सन्ति । अश्विन्यादीनि सप्तविंशतिसङ्ख्यकानि नक्षत्राणि प्रसिद्धानि सन्ति । सूर्यचन्द्रयोः स्पष्टगतिकलानां योगवशाद् विष्कम्भादयः सप्तविंशतिसङ्ख्यका योगाः समुत्पद्यन्ते । तिथ्यर्धं करणमिति कथ्यते । एकस्यां तिथौ करणद्वयं भवति । करणं द्विधा विभज्यते - चरस्थिरभेदात् । चरसंज्ञकानि बबादीनि सप्तकरणानि, एवमेव स्थिरसंज्ञकानि चत्वारि करणानि सन्ति । एकस्मिन् चान्द्रमासे त्रिंशत्तिथयो भवन्ति । तत्र षष्ठीसङ्ख्यकानि करणानि भवन्ति । तेषु मध्ये षट्पञ्चाशत् (५६) सङ्ख्यकानि चरकरणानि चत्वारि स्थिरकरणानि च भवन्ति ।

(क) पञ्चाङ्गं किम् अस्ति ?

(ख) अमायां चन्द्रसूर्यौ कुत्र भवतः ?

(ग) नक्षत्राणि कति सन्ति ?

(घ) एकस्यां तिथौ कति करणानि भवन्ति ?

(ङ) करणानि कति भवन्ति ?

८. मित्रस्य मुखात् पाठस्य सप्तमम् अनुच्छेदं श्रुत्वा उत्तरं वदत

(क) सुन्दरः पक्षः कः आसीत् ?

(ख) बेनः कीदृशानि पुस्तकानि अपठत् ?

(ग) बेनस्य गृहं कुत्र आसीत् ?

(घ) बेनः पुस्तकानां खण्डानि कुत्र स्थापयति स्म ?

(ङ) कियत्कालपर्यन्तं बेनः पुनः पुनः पठति स्म ?

९. सत्यवाक्ये 'आम्' इति वदत, असत्यवाक्ये 'नहि नहि' इति वदत

(क) बेनस्य गृहे त्रयः सदस्याः आसन् ।

(ख) माता अन्येषां गृहेषु कार्यं करोति स्म ।

(ग) अस्माभिः आत्मविश्वासः नैव कर्तव्यः ।

(घ) शिक्षकेन प्रदर्शितस्य पाषाणस्य नाम अस्तु आसीत् ।

(ङ) बेनः पूर्वम् आत्मानं मन्दबुद्धिवन्तं पश्चाच्च कुशाग्रबुद्धिम् अनुभूतवान् ।

११. पाठस्य कथायाः सन्देशः कः ? स्वमातृभाषायां वदत ।

१२. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत

(क) श्रवणपाठं श्रुत्वा उत्तरं सत्यम् असत्यं वा इति वदत

(अ) त्रैराशिकगणितम् अङ्कगणितक्षेत्रस्य आधारस्तम्भरूपं वर्तते ।

(आ) त्रैराशिकगणितम् आधुनिकगणिते ऐकिकनियमम् इति नाम्ना प्रसिद्धम् अस्ति ।

(इ) त्रैराशिकगणिते त्रयाणां राशीनां ज्ञानं पूर्वमेव न भवति ।

(ई) त्रैराशिकगणितस्य अतीव महत्त्वम् अस्ति ।

(उ) प्रमाणम् एव चतुर्थराशिरस्ति ।

(ख) श्रवणपाठं श्रुत्वा उत्तरं वदत ।

(अ) किं त्रैराशिकमिति नाम्ना व्यवह्रियते ?

(आ) पूर्वज्ञातानां त्रयाणां राशीनामाधारे किं क्रियते ?

(इ) भास्कराचार्येण किमुक्तं विद्यते ?

(ई) त्रैराशिकगणितम् आधुनिकगणिते किमुच्यते ?

(उ) त्रैराशिकगणितस्य त्रयः राशयः के ?

## पठनम्

१. पाठस्य कथायाः सस्वरं पठनं कुरुत ।

२. लेख्यचिह्नानि विचार्य पाठस्य चतुर्थम् अनुच्छेदं पठत ।

३. अन्तिमस्य द्वयोः अनुच्छेदयोः निरवच्छिन्नपठनं कुरुत ।

४. पाठस्य द्वितीयं तृतीयं च अनुच्छेदं मनसा पठित्वा समुचितम् उत्तरं चिनुत

(क) बेनस्य माता कुत्र कार्यं करोति स्म ?

(अ) अन्येषां गृहेषु (आ) क्षेत्रेषु (इ) कार्यालये

(ख) बेनस्य माता कति कक्षापर्यन्तं पठितवती ?

(अ) द्वितीयकक्षापर्यन्तम्   (आ) तृतीयकक्षापर्यन्तम् (इ) चतुर्थकक्षापर्यन्तम्

(ग) माता कस्य दुरवस्थां पश्यति स्म ?

(अ) पुत्रयोः   (आ) स्वस्य   (इ) ग्रामीणानाम्

(घ) अवशिष्टेषु समयेषु किं कर्तव्यम् आसीत् ?

(अ) कार्यं कर्तव्यम्   (आ) खेलितव्यम्   (इ) पठितव्यम्

(ङ) कः मातरं प्रेरितवान् ?

(अ) गुरुः   (आ) पतिः   (इ) ईश्वरः

## ५. पाठं पठित्वा उत्तरयत

(क) अस्माभिः किं कर्तव्यम् ?

(ख) माता प्रतिसप्ताहं किमकरोत् ?

(ग) बेनः सार्वजनिकात् पुस्तकालयात् किं किं पठितवान् ?

(घ) बेनः पञ्चमकक्षापर्यन्तम् आत्मानं कीदृशम् अनुभूतवान् ?

(ङ) बेनस्य हस्तोत्थापनानन्तरं सखायः किम् अकुर्वन् ?

## ६. अनुच्छेदं पठित्वा प्रश्नानाम् उत्तराणि वदत

प्राचीनकाले मिथिलानगरे कश्चन विद्यापतिनामकः एकः शिवभक्तः ब्राह्मणः आसीत् । एकदा स कार्यवशाद् ग्रामान्तरे गच्छन् आसीत् । तस्य कर्मकरः अपि सेवकरूपेण अनुगतः आसीत् । मार्गे गच्छन् विद्यापतिः श्रान्तः पिपासितश्च अभवत् । जलाभावात् सः चलितुमेव असमर्थः अभवत् । तदनन्तरं स कर्मकरम् अकथयत्, “अहं जलं पातुमिच्छामि” इति । कर्मकरः इतस्ततः जलस्य अन्वेषणं कृतवान् । परन्तु तत्र कुत्रापि जलं न आसीत् । शिवः रहसि स्वजटातः गङ्गाजलं निःसार्य तस्मै दत्तवान् । विद्यापतिः कर्मकरम् अपृच्छत्, “एतज्जलं त्वया कुतः आनीतम् ?” इति । कर्मकरः अकथयत्, “अत्र समीपे सरोवरः अस्ति, ततः आनीतम्” । विद्यापतिः दृढेन अकथयत् “न हि भोः, ईदृशं जलम् अत्र समीपे कुत्रापि नास्ति । भवान् सत्यं न वदति” । तदनन्तरं कर्मकरः किञ्चिद् दूरे गत्वा सरोवरस्य अन्वेषणाभिनयं कृतवान् । तत्र सरोवरं न दृष्ट्वा विद्यापतिः विचारम् अकरोत्, “नहि भोः, एषः साधारणः कर्मकरः नास्ति । कः एषः ?, कश्चित् सिद्धः, देवः वा” इति । ततः विद्यापतिः पुनः अकथयत्, “यावद् भवान् स्वपरिचयं न ददाति, तावदहं जलं न पिबामि” इति । विद्यापतेः निश्चलां भक्तिं दृष्ट्वा शिवः प्रसन्नः अभवत् । स सपदि

स्वस्वरूपं अदर्शयत् ।

(क) मिथिलानगरे कः आसीत् ?

(ख) मार्गे किमर्थं चलितुमेव असमर्थः अभवत् ?

(ग) कर्मकरः कुतः जलम् आनीतवान् ?

(घ) विद्यापतिः पुनः किम् अकथयत् ?

(ङ) शिवः कथं प्रसन्नः अभवत् ?

(च) कः स्वस्वरूपम् अदर्शयत् ?

(छ) शिवः कुतः जलं दत्तवान् ?

प्राचीनकालमा मिथिला नगरमा विद्यापति नाम गरेका शिवभक्त ब्राह्मण थिए । एक दिन उनी काम परेर अर्को गाउँमा जाँदै थिए । उनका सेवक पनि उनीसँगै गएका थिए । जाँदाजाँदै उनी थकित र तिर्खाले व्याकुल भए । पानी नपाएर उनी हिँड्नै सकेनन् । उनले सेवकलाई म पानी पिउन चाहन्छु भने । सेवकले वरिपरि पानी खोजे । तर कहीँ पनि पानी थिएन । शिवले एकान्तमा आफ्नो जटाबाट गङ्गाजल झिकेर उनलाई दिए । पानी कहाँबाट ल्यायौ ? विद्यापतिले सेवकलाई सोधे । यहाँ नजिकै तलाउ छ त्यहीँबाट, सेवकले जवाफ दिए । विद्यापतिले यकिनसाथ यस्तो पानी त्यहाँ वरिपरि नभएको जिकिर गरे । उनले सेवकले सत्य नबोलेको बताए । त्यसपछि सेवकले अलि पर गएर तलाउ खोजेको अभिनय गरे । त्यहाँ तलाउ नदेखेर यो कुनै साधारण सेवक होइन, यो कुनै सिद्ध वा देवता हुनुपर्छ भनेर विद्यापतिले विचार गरे । त्यसपछि उनले परिचय नदिएसम्म पानी नपिउने भनेर सेवकलाई भने । विद्यापतिको निश्चल भक्ति देखेर भगवान् शिव प्रसन्न भए । उनले तत्काल आफ्नो स्वरूपको दर्शन दिए ।

## ७. उपरितनम् एव अनुच्छेदं पठित्वा रिक्तस्थानानि पूरयत

(क) एकदा स ..................... ग्रामान्तरे गच्छन् आसीत् ।

(ख) सः कर्मकरम् अकथयत् ................................ इति ।

(ग) कर्मकरः किञ्चित् दूरे गत्वा........................ अकरोत् ।

(घ) परन्तु तत्र कुत्रापि जलम् .................................... ।

(ङ) स ..................... सपदि स्वरूपम् अदर्शयत् ।

८. प्रदत्तां कथां पठित्वा प्रश्नोत्तराणि लिखत

एकस्मिन् देशे दिपीपनामा राजा आसीत् । तस्य अङ्गरक्षकः सेवकश्च वानरः आसीत् । वानरः विश्वासभाजनः आसीत् । एकदा राजा सुप्तः आसीत् । वानरः व्यजनं नीत्वा वायुं विदधानः आसीत् । तदानीमेव एका मक्षिका आगता । सा राज्ञः वक्षःस्थलोपरि उपविष्टा । वानरः व्यजनेन पुनः पुनः मक्षिकां निषिद्धवान् । परन्तु सा मुहुर्मुहुः तत्रैव उपविष्टा । ततः वानरः क्रुद्धः सञ्जातः । चपलः वानरः तीक्ष्णं खड्गमादाय मक्षिकायाः उपरि प्रहारं विहितवान् । ततो मक्षिका उड्डीय गता । तेन तीक्ष्णधारेण खड्गेन राज्ञः वक्षस्थलं द्विधा विभक्तम् । राजा त मृतवान् । अतः मूर्खस्य विश्वासः नैव कर्तव्यः ।

एकजना राजा ओछ्यानमा निदाइरहेको । छेउमा बाँदरले हाते पङ्खा लिएर हम्किरहेको । राजाको छातीमा झिँगा आएर बसिरहेको । कोठाको एक कुनामा तरबार राखिराखेको चित्र ।

(क) राज्ञः सेवकः कः आसीत् ?

(ख) राजा कीदृश्याम् अवस्थायाम् आसीत् ?

(ग) मक्षिका कुत्र उपविष्टा ?

(घ) वानरः किमकरोत् ?

(ङ) अस्य पाठस्य सन्देशः कः ?

(च) राज्ञः वक्षः स्थलं कीदृशं सञ्जातम् ?

एकादेशमा दिलीप नामका राजा थिए । उनको अङ्गरक्षक र सेवक बाँदर थियो । बाँदर विश्वासिलो नै थियो । एक दिन राजा सुतेका थिए । बाँदर पङ्खा लिएर हम्किरहेको थियो । त्यही बेला एउटा झिँगा आइपुग्यो । झिँगा राजाको छातीमा बस्यो । बाँदरले पङ्खाले बारम्बार झिँगालाई हटाउन खोज्यो । तर झिँगा बारम्बार त्यहीँ बसिरहयो । बाँदर रिसायो । चञ्चले बाँदरले धारिलो तरबार लिएर झिँगालाई हान्यो । झिँगा उडेर गयो । धारिलो तरबारले राजाको छाती दुई चिरा भयो । राजा

मर्यो । त्यसकारण मूर्खको विश्वास गर्नुहुँदैन ।

## लेखनम्

१. पाठपूर्वस्थं संवादं स्वस्य पुस्तिकायां लिखत ।

२. अधस्तपदानि प्रयुज्य वाक्यरचनां कुरुत

पाषाणः, छात्रवृत्तिः, कुशाग्रबुद्धिः, आत्मविश्वासः, प्रतीक्षाऽचक्रे, विकल्पः, आरब्धवान्, चकास्ति, तावत्, अनुभूतवान् ।

३. मन्त्रे तीर्थे..... इति श्लोकं पूरयित्वा गुरोः साहाय्येन तस्य सरलार्थं लिखत ।

४. पाठस्यान्तिमस्य अनुच्छेदस्य श्रुतिलेखनं कुरुत ।

५. अधस्तान् पदान् प्रयुज्य कथां रचयत । कथायाः शीर्षकं च दत्त ।




६. एकवाक्येन उत्तरं लिखत

(क) बेनः कारसनः अधुना कः अस्ति ?

(ख) बेनस्य परिवारे कति जनाः सन्ति ? ते च के ?

(ग) माता स्वपुत्रौ शिक्षायाः महत्त्वं दर्शयितुं किं कृतवती ?

(घ) शिक्षकस्य हस्तयोः किम् आसीत् ?

(ङ) बेनस्य बुद्धिः भिन्ना अथवा तस्य विचारः ?

(च) सार्वजनिकात् पुस्तकालयात् सः किं किं पठितवान् ?

(छ) अस्माभिः आत्मनि किं कर्तव्यम् ?

(ज) बेनस्य उत्तरप्रदानसमये सखायः किमकुर्वन् ?

(झ) बेनस्य कथाश्रवणपश्चात् जनाः किं पृच्छन्ति ?

(ञ) पुरा गृहं कीदृशं भवति स्म ?

७. सरलैः वाक्यैः पाठस्य सन्देशं लिखत ।

८. अधोलिखितानां वाक्यानां क्रमविन्यासेन कथां रचयत ।

( ) तस्य एक एव उदरः द्वे मुखे स्तः ।

( ) अपमानं संस्मृत्य द्वितीयमुखेन तत्फलं भक्षितम् ।

( ) प्रथममुखेन एकदा अमृतसमानं फलं सम्प्राप्तम् ।

( ) प्रशंसां श्रुत्वा द्वितीयमुखम् अपि फलम् अयाचत ।

( ) तद्दिनादेव द्वितीयं मुखं सविषादं तिष्ठति ।

( ) ततः द्वौ एव विनष्टौ ।

( ) कुत्रचित् सरोवरे भारुण्डनामा पक्षी आसीत् ।

( ) प्रथममुखेन उक्तम्- मा मैवं कुरु । एवं कृते द्वयोरपि विनाशो भविष्यति इति ।

( ) तन्मुखेन फलं भक्षितम् । फलस्य बहवी प्रशंसा विहिता ।

( ) विहस्य प्रथममुखेन उक्तम्- आवयोः उदरम् एकमेव, एका तृप्तिश्च । किं पृथग्भक्षितेन ? शेषेण फलेन प्रिया तोष्यते इति ।

( ) अन्यस्मिन् दिने द्वितीयमुखेन विषफलं प्राप्तम् । प्रथममुखस्य अपमानात् सः भक्षयितुम् आरब्धवान् ।

९. उपरितनां कथां पठित्वा परस्परं मेलयत

| समूहः कः | समूहः खः |
|---|---|
| भारुण्डस्य | वषफलं प्राप्तम् । |
| प्रथममुखेन | एकः उदरः द्वे मुखे स्तः । |
| द्वितीयमुखेन | विनष्टौ |
| द्वौ एव | अमृतसमानं फलं प्राप्तम् । |

१०. बेनः कथं याले विश्वविद्यालये छात्रवृत्तिं सम्प्राप्य कुशलः चिकित्सकः सञ्जातः ? लिखत ।

११. उदाहरणं विलोक्य कोष्ठकाद् पर्यायवाचिनः शब्दान् अन्विष्य लिखत

किञ्चित्, शिला, अवलोकयति, पारयति, अत्ति, तीक्ष्णमतिः, आश्चर्यान्वितः, गताः, प्राप्तिः, निश्शब्दताम्, देवः ।

उदाहरणम्

ईश्वरः- देवः ।

१. पश्यति-

२. खादति-

३. ईषत्-

४. पाषाणः-

५. कुशाग्रबुद्धिः-

६. विस्मितः-

७. उपलब्धिः-

८. नीरवताम्-

९. व्यतीताः-

१०. शक्नोति-

## रचनात्मकः अभ्यासः

१. पूर्वं श्रुतां कथां कक्षायां श्रावयत ।

२. अधस्तनं चित्रं दृष्ट्वा रिक्तस्थानानि पूरयत

| |
|---|
| अस्पतालको फोटो । जहाँ विभिन्न थरिका बिरामीअरू र तिनीअरूलाई उपचार गरिरहेका डाक्टरअरू देख्न सकिन्छ । |

अयं .................. अस्ति । अत्र ..................... सन्ति । औषधं विना रोगस्य..................... न भवति । स्वस्थः आहारः सुस्वास्थ्यस्य..................... अस्ति । रोगस्य उपचारात् रोगहीनता एव ................ । अतः अस्माभिः स्वस्थैः. ................................. ।

| भवितव्यम्, चिकित्सालयः, निदानम्, चिकित्सकाः रोगिणश्च, समीचीनम् |
|---|

## श्रवणपाठः- त्रैराशिकम्

परिज्ञातत्रिराश्याधारे चतुर्थराशेर्ज्ञानं येन गणितेन भवति तद् गणितमेव त्रैराशिकमिति नाम्ना लोके व्यवह्रियते । एतत् आधुनिकगणिते ऐकिकनियमम् ९ग्लष्तबचथ ःभतजयम0 इति नाम्ना प्रसिद्धम् अस्ति । त्रैराशिकगणितं प्राचीन-अर्वाचीनयोः द्वयोः गणितयोः अङ्कगणितक्षेत्रस्य आधारस्तम्भरूपं वर्तते । त्रैराशिकगणिस्य अतीव महत्त्वं सर्वव्यापकत्वञ्च विद्यते । ज्योतिर्विदा भास्कराचार्येण 'अस्ति त्रैराशिकं पाटी' इति कथितं विद्यते । तत्र पाटिगणिते तादृशी समस्या न विद्यते या समस्या त्रैराशिकेन गणितविधिना समाधानं न भवेत् । तत्र त्रैराशिकगणिते त्रयाणां राशीनां ज्ञानं पूर्वमेव भवति । यथा प्रमाणम्, प्रमाणफलम् इच्छा च समस्या स्थापनक्रम एव ज्ञानं भवति । अत एवास्य गणितस्य नाम त्रैराशिकं जातम् । तेषां पूर्वज्ञातानां त्रयाणां राशीनामाधारे इच्छाफलस्य परिज्ञानं कर्तव्यं भवति । तद् इच्छाफलमेव चतुर्थराशिर्भवति । तस्य चतुर्थराशेर्ज्ञानमेव त्रैराशिकगणितस्योद्देश्यं भवति ।

एकादशः पाठ

# नागरिकतायाः प्रमाणपत्रम्

ललितचौधरी बर्दियाजनपदस्य सर्वकारीयकार्यालये कार्यं करोति । तस्य सप्ततिवर्षीया माता वर्तते । सा वृद्धभरणस्य विषये श्रुतवती अस्ति । सा तत् प्राप्तुम् इच्छति । माता स्वेच्छां पुत्रं कथयति । तस्य कृते नागरिकतायाः प्रमाणपत्रस्य आवश्यकता भवति । ललितः मातरं नीत्वा जनपदप्रशासनकार्यालयं गच्छति । ललितस्य दशवर्षीयः पुत्रो वर्तते । तस्य नाम अजयः अस्ति । अजयोऽपि पितरं पितामहीञ्च अनुगच्छति । ते प्रशासनकार्यालयं प्राप्नुवन्ति ।

(एउटा ठुलो सरकारी कार्यालयमा विभिन्न उमेरसमूहका मानिसको भिड र चहलपहल देखाउने । त्यसमा लठ्ठी टेकेकी बुढीको छेउमा अधबैँसे मानिसले केही लेखिरहेको देखाउने । छेउमा दश-बाह्र वर्षको केटो पनि देखियोस्)

ललितस्य हस्ते एकं पत्रमस्ति । स पत्रस्य रिक्तस्थानानि पूरयति । ततस्त्रय एव जनाः कार्यालयस्य अधिकृतस्य कार्यकक्षं प्रविशन्ति । अधिकृतस्य कार्यकक्षे एका पताका अस्ति । अधिकृतः पत्रे हस्ताक्षरं करोति । ललितः तत् पत्रम् अपरस्मिन् कोष्ठे अर्पयति । ते घण्टावधि प्रतीक्षन्ते । अधिकृतः नागरिकतायाः प्रमाणपत्रं मात्रे ददाति । तत् गृहीत्वा माता, पुत्रः पौत्रश्च गृहं प्रतिगच्छन्ति । मार्गे अजयः कार्यालयस्य पताकायाः विषये पितरं पृच्छति । पिता गृहं गत्वा उत्तरं दास्यामीति गदति । गृहमागत्य पिता अजयाय एकं पुस्तकं ददाति । पुस्तकस्य पाठञ्च दर्शयति । अजयः सचित्रम् अधो लिखितं पाठं साभिरुचि पठति ।

ललित चौधरी बर्दिया जिल्लाको सरकारी कार्यालयमा काम गर्छन् । उनकी सत्तरी वर्षकी आमा हुनुहुन्छ । उहाँले वृद्धभत्ताका बारे सुन्नुभएको छ । उहाँ त्यो पाउन

चाहनुहुन्छ । आमा आफ्नो इच्छा छोरालाई भन्नुहुन्छ । त्यसका लागि नागरिकताको प्रमाणपत्र आवश्यक पर्छ । ललित आमालाई लिएर जिल्ला प्रशासन कार्यालय जान्छन् । ललितको दशबर्से छोरो छ । उसको नाम अजय हो । अजय पनि बुबा र हजुरआमाको पछि लाग्छ । उनीहरू प्रशासन कार्यालय पुग्छन् ।

ललितको हातमा एउटा फारम छ । उनी फारम भर्छन् । त्यसपछि तीनै जना कार्यालयका अधिकृतको कार्यकक्षमा पस्छन् । अधिकृतको कार्यकक्षमा एउटा झन्डा छ । अधिकृतले फारममा सही गर्छन् । ललित त्यो फारम अर्को कोठामा बुझाउँछन् । उनीहरू एक घण्टा पर्खिन्छन् । अधिकृतले नागरिकताको प्रमाणपत्र आमालाई दिन्छन् । त्यो लिएर आमा, छोरा र नाति घर फर्किन्छन् । बाटामा अजय कार्यालयको झन्डाका विषयमा बुबालाई सोध्छ । बुबा घर गएर जबाफ दिउँला भन्छन् । घर आएपछि बुबा अजयलाई एउटा पुस्तक दिन्छन् । पुस्तकको पाठ पनि देखाइदिन्छन् । अजय चित्रसहितको तलको पाठ चाख मानेर पढ्छ ।

## राष्ट्रियध्वजः

(माथिल्लो भागमा नेपालको ठुलो आकारको रङ्गीन राष्ट्रिय झन्डाको चित्र, तल्लोपट्टि हिमालयको पृष्ठभूमिमा केही सानो आकारमा नेपालको नक्सा र विभिन्न जातीय पहिचान भएका र हातेमालो गरेका प्रसन्न आकृतिका नेपालीहरूको चित्र)

संसारे बहूनि राष्ट्राणि सन्ति । तेषां विस्तृतपरिचयः सर्वेषां कृते सुलभो न भवति । एतदर्थं राष्ट्राणि स्वपरिचायकानि साङ्केतिकचिह्नानि निर्धारयन्ति । तानि राष्ट्रियचिह्नानि निगद्यन्ते । तेषु राष्ट्रियध्वजः प्रधानो वर्तते । नेपालस्यापि राष्ट्रियचिह्नानि सन्ति । एतानि अस्माकं गौरवं, स्वाभिमानम् अस्तित्वञ्च परिचाययन्ति । अस्माकं राष्ट्रियध्वजः सर्वेषां नेपालिनां परिचयो वर्तते ।

नेपालस्य राष्ट्रध्वजः विलक्षणः दृश्यते । अन्येषां राष्ट्राणां ध्वजाः प्रायः चतुष्कोणात्मकाः

भवन्ति । तेषु केवलं ताराणां, चन्द्रस्य चन्द्रताराणां वा अङ्कनं विधीयते । नेपालस्य ध्वजः द्वित्रिकोणात्मकः वर्तते । अस्य निर्माणं रक्तनीलरङ्गाभ्यां विहितमस्ति । प्रायः रक्तरङ्गमयस्यास्य ध्वजस्य पार्श्वभागे नीलरङ्गो वर्तते । रक्तरङ्गः शौर्य-शक्ति-वीरतानां प्रतीकं मन्यते । अयं जनानां सुखकरः शुभकरश्च मतोऽस्ति । देव्यै अयमेव रङ्गः सन्तोषकरो भवति । नीलरङ्गः शान्तिम्, गाम्भीर्यम् विशालत्वञ्च बोधयति । गगनं नीलं विशालञ्च भवति । समुद्रः शान्तः गभीरश्च विलोक्यते । अनेन रङ्गद्वयेन दुर्हृदां कृते शक्तिप्रदर्शनम् , सुहृदां कृते शान्तेः अवलम्बनञ्चेति नेपालिनां वैशिष्ट्यं प्रकाशते ।

ध्वजस्य उपरिभागे चन्द्रः अधो भागे सूर्यश्च विद्यमानौ स्तः । अस्यापि विशेषार्थः वर्तते । चन्द्रसूर्यौ अनन्तकालात् ब्रह्माण्डे विराजमानौ विद्येते । इमौ ब्रह्माण्डस्य अस्तित्वं यावत् उदयास्तादिकार्याणि विधत्तः । अनेन यावत्कालपर्यन्तं चन्द्रसूर्यौ तिष्ठतः तावत्कालपर्यन्तं नेपालः तिष्ठति, नेपालिनश्च भवन्तीति भावः व्यज्यते । चन्द्रः नक्षत्रपतिः सूर्यश्च ग्रहपतिर्मन्येते । अतः चन्द्रसूर्ययोः पूजनेन सम्मानेन च सकलानि ग्रहनक्षाणि अपि तुष्यन्ति, नेपालाय नेपालिभ्यश्च मङ्गलं वितरन्तीति विश्वस्यते । चन्द्रात् सूर्याच्च चन्द्रवंशस्य सूर्यवंशस्य च प्रजाः अजायन्त इति प्रसिद्धिरस्ति ।

अस्माकं राष्ट्रध्वजे संस्कृतिरपि सन्निहिता अस्ति । समयस्य विभाजनं चन्द्रसूर्ययोः गत्या अवस्थया वा निर्धार्यते । चन्द्रस्य गतेः अवस्थायाः वा आधारेण तिथयः निर्धारिताः भवन्ति । सूर्यस्य गतेः अवस्थायाः वा अनुसारेण मासाः, दिवसाः वासराश्च निश्चीयन्ते । देव-पितृकार्याणि तिथीनामनुसारेण सम्पाद्यन्ते । दैनिकव्यवहारे मास-दिवस-वासराणां गणना भवति । इत्थं चन्द्रसूर्यौ समयस्य संस्कृतेः नियामकौ भवतः ।

विद्वांशः चन्द्रसूर्ययोः ध्वजस्य त्रिकोणाकारस्य च दार्शनिकदृष्ट्यापि व्याख्यां विदधति । जगत्यां प्राणिनः आधिभौतिकेन, आधिदैविकेन,आध्यात्मिकेन च दुःखेन पीडिताः सन्ति । एतत् तापत्रयम् उच्यते । चन्द्रः शीतांशोः वृष्ट्या प्राणिनां तापं शमयति । सूर्यश्च तं तापं प्रदाह्य प्राणिनः सुखिनः कारयति । एवमेव चन्द्रसूर्यौ ध्वजस्य त्रिकोणात् नेपालिनामपि त्रिविधं दुःखं निवारयतः ।

भगवन्तौ विष्णुः 'गरुडध्वजः', शिवश्च ' वृषभध्वजः' निगद्येते । रतिपतिः कामदेवः 'मकरध्वजः' नाम्ना प्रसिद्धो वर्तते । एतेन प्रमाणेन ध्वजस्य प्रीतिः प्रयोगश्च देवकाले एव आस्तामिति सङ्केतो मिलति । कतिपयानां देवीदेवतानां रथेषु ध्वजः स्थापितो

दृश्यते । चित्रेषु रामरावणयोर्युद्धे महाभारतस्य धर्मयुद्धे च वीराः ध्वजं गृहीत्वा युयुत्सवः विलोक्यन्ते । पुरा दुर्गेषु राजप्रासादेषु च ध्वजः स्थाप्यते स्म । ध्वजः गौरवस्य, प्रतिष्ठायाः, परिचयस्य च प्रतीकं मन्यते स्म । अधुनापि अत्र अन्तरं नावलोक्यते ।

( कुनै न कुनै झन्डाको आकार समेत स्पष्ट देखिने/बुझिने गरी चाँगुनारायण मन्दिरको चित्र राखिदिने)

नेपालस्य राष्ट्रध्वजः केन कदा अभिकल्पितः, रचितः, प्रचलनञ्च आनीतः इति निश्चेतुं न शक्यते । न्यूनतोऽपि लिच्छविकालात् अस्य प्रारूपं निर्मितमिति अनुमीयते । मल्लकालेऽपि अस्य स्वरूपे किञ्चित् परिवर्तनम् अजायत । वर्तमानस्वरूपं पृथ्वीनारायणशाहस्य शासनकालाद् विकसितम् अभवत् । नेपालस्य एकीकरणस्य पूर्णतायाः अनन्तरमपि अस्य आकृतौ सामान्यं परिवर्तनं विहितमस्ति । २०१९ तमे वैक्रमाब्दे निर्मितेन नेपालस्य संविधानेन वर्तमानरूपं स्वीकृतमासीत् । गोरखाराज्यस्य विस्तरेण सह राष्ट्रध्वजस्य प्रचारश्च वृद्धिङ्गतो दृश्यते ।

कस्यापि देशस्य नागरिकाः स्वदेशस्य राष्ट्रध्वजस्य महिमानं गायन्ति । ते राष्ट्रभक्तिं प्रकटयन्ति । विशेषेषु उत्सवेषु ध्वजोत्तोलनं कुर्वन्ति । अनेन नागरिकेषु राष्ट्रभक्तिः बलवती भवति । नेपालस्य राष्ट्रकविना माधवघिमिरेऽभिधेन कविना नाटककारेण च गोपालप्रसादरिमालेन च अस्माकं राष्ट्रध्वजस्य रुचिरं वर्णनं विहितमस्ति । वैदेशिकाश्च नेपालस्य राष्ट्रध्वजं विलोक्य विस्मयम् अनुभवन्ति । अस्माकं राष्ट्रध्वजः निखिलानां नेपालिनां राष्ट्रभावं निर्वहति ।

संसारमा धेरै राष्ट" छन् । तिनको विस्तृत परिचय सबैका लागि सुलभ हुँदैन । त्यसैले राष्ट्रहरूले आफ्नो परिचय दिने साङ्केतिक चिहनहरू निर्धारण गरेका हुन्छन् । ती राष्ट्रिय चिहन भनिन्छन् । तिनमा राष्ट्रिय झन्डा प्रधान हुन्छ । नेपालका पनि राष्ट्रिय चिहन छन् । यिनले हाम्रो गौरव, स्वाभिमान र अस्तित्वको परिचय दिन्छन् । हाम्रो राष्ट्रिय झन्डा सबै नेपालीको परिचय हो ।

नेपालको राष्ट्रिय झन्डा विलक्षण देखिन्छ । अरू राष्ट्रका झन्डामा अकसर चारकुने हुन्छन् । तिनमा केवल ताराहरू, चन्द्रमा वा चन्द्रमा र ताराको अङ्कन गरिन्छ । नेपालको झन्डा दुई भिन्नभिन्न त्रिकोणले बनेको छ । यसको निर्माण रातो र नीलो रङबाट गरिएको छ । प्रायः रातो रङले बनेको यस झन्डाको छेउ वा किनारामा नीलो रङ छ । रातो रङ शौर्य, शक्ति र वीरताको प्रतीक मानिन्छ । यो मानिसका लागि सुखकारक र शुभकारक मानिएको छ । देवी यही रङबाट सन्तुष्ट हुन्छिन् । नीलो रङले शान्ति, गम्भीरता र विशालता बुझाउँछ । आकाश नीलो र विशाल हुन्छ । समुद्र शान्त र गम्भीर देखिन्छ । यी दुई रङबाट वैरीका लागि शक्ति देखाउने र मित्रका लागि शान्ति अपनाउने नेपालीहरूको विशेषता झल्किन्छ ।

झन्डाको माथिल्लो भागमा चन्द्र र तल्लो भागमा सूर्य रहेका छन् । यसको पनि विशेष अर्थ छ । चन्द्रसूर्य अनन्तकालदेखि ब्रह्माण्डमा रहिरहेका छन् । यी ब्रह्माण्डको अस्तित्व रहेसम्म उदाउने अस्ताउने कार्य गरिरहन्छन् । यसबाट जहिलेसम्म चन्द्रसूर्य रहन्छन् त्यस बेलासम्म नेपाल र नेपाली रहन्छन् भन्ने भाव व्यक्त हुन्छ । चन्द्र नक्षत्रपति र सूर्य ग्रहपति मानिन्छन् । त्यसैले चन्द्रसूर्यको पूजा र सम्मानबाट सबै ग्रहनक्षत्रहरू पनि प्रसन्न हुन्छन् र नेपाल र नेपालीलाई मङ्गल दिन्छन् भन्ने विश्वास गरिन्छ । चन्द्र र सूर्यबाट चन्द्रवंशी र सूर्यवंशी प्रजा फैलिए भन्ने प्रसिद्धि छ

हाम्रो राष्ट्रिय झन्डामा संस्कृति पनि रहेको छ । समयको विभाजन चन्द्रसूर्यको गति वा अवस्थाका आधारमा गरिन्छ । चन्द्रको गति वा अवस्थाका आधारमा तिथिहरू निर्धारित हुन्छन् । सूर्यको गति वा अवस्था अनुसार महिना, गते र वारहरू निश्चित गरिन्छन् । देव-पितृकार्यहरू तिथिअनुसार गरिन्छन् । दैनिक व्यवहारमा महिना, गते र वारको गणना गरिन्छ । यसरी चन्द्रसूर्य समयको संस्कृतिका नियामक हुन्छन् ।

विद्वान्हरू चन्द्रसूर्य र झन्डाको तीनकुने आकारको दार्शनिक दृष्टिबाट पनि व्याख्या गर्छन् । संसारमा प्राणीहरू आधिभौतिक, आधिदैविक र आध्यात्मिक दुःखबाट पीडित छन् । यसलाई तापत्रय भनिन्छ । चन्द्रले शीतल किरणको वर्षा गरेर प्राणीहरूको ताप मेटाइदिन्छ । सूर्यले पनि त्यो ताप डढाइदिएर प्राणीहरूलाई सुखी बनाउँछ । यसै गरी चन्द्रसूर्यले झन्डाको तीन कुनाबाट नेपालीहरूको तीन प्रकारको दुःख निवारण गर्दछन् ।

भगवान् विष्णु 'गरुडध्वज' र शिव 'वृषभध्वज' भनिन्छन् । रतिका पति कामदेव ' मकरध्वज' नामबाट प्रसिद्ध छन् । यस प्रमाणबाट झन्डाको प्रेम र प्रयोग देवताको

समयमै थियो भन्ने सङ्केत पाइन्छ । कतिपय देवीदेवताका रथमा झन्डा राखिएको देखिन्छ । चित्रमा राम र रावणको युद्ध र महाभारतको धर्मयुद्धमा वीरहरू झन्डा लिएर लड्न उत्सुक देखिन्छन् । पहिले किल्ला र राजदरबारमा झन्डा राखिन्थ्यो । झन्डा गौरव, प्रतिष्ठा र परिचयको प्रतीक मानिन्थ्यो । अहिले पनि यसमा अन्तर देखिँदैन ।

नेपालको राष्ट्रिय झन्डा कसले कहिले सोच्यो, बनायो र चलनचल्तीमा ल्यायो भन्ने कुरा निश्चित गर्न सकिँदैन । कम्तीमा पनि लिच्छविकालबाट यसको प्रारूप बनेको अनुमान गरिन्छ । मल्लकालमा पनि यसको स्वरूपमा केही परिवर्तन भयो । वर्तमान स्वरूप पृथ्वीनारायण शाहको शासनकालबाट विकसित भएको हो । एकीकरण पूरा भइसकेपछि पनि यसको आकारमा सामान्य परिवर्तन गरिएको छ । २०१९ सालको संविधानले वर्तमान स्वरूप स्वीकृत गरेको हो । गोरखाराज्यको विस्तारसँगै राष्ट्रिय झन्डाको प्रचार पनि बढेको देखिन्छ ।

कुनै पनि देशका नागरिकहरू आफ्नो देशको राष्ट्रिय झन्डाको महिमा गाउँछन् । उनीहरू राष्ट्रभक्ति प्रकट गर्छन् । विशेष उत्सवहरूमा झन्डोत्तोलन गर्छन् । यसबाट नागरिकहरूमा राष्ट्रभक्ति बलियो हुन्छ । नेपालका राष्ट्रकवि माधव घिमिरे र कवि तथा नाटककार गोपालप्रसाद रिमालले हाम्रो राष्ट्रिय झन्डाको रोचक वर्णन गरेका छन् । विदेशीहरू पनि नेपालको राष्ट्रिय झन्डा देखेर छक्क पर्छन् । हाम्रो राष्ट्रिय झन्डाले सबै नेपालीहरूको राष्ट्रभावलाई बोकेको छ ।

## शब्दार्थाः

प्रमाणपत्रम् = प्रमाणदर्शकपत्रम्, प्रमाणपत्र (ऋभचतषष्अबतभ)

जनपदः = मण्डलम्, जिल्ला (म्ष्कतचष्अत)

वृद्धभरणम् = ज्येष्ठनागरिकवृत्तिः, वृद्धभत्ता (क्भलष्यच अष्तष्शभल- बियिधबलअभ)

पितामही = पितुः माता, घरकी हजुरआमा (ँबतजभच'कभयतजभच ⁄न्चबलमभयतजभच)

प्राप्नुवन्ति = अधिगच्छन्ति, पुग्छन्⁄पाउँछन् (चभबअज)

कार्यकक्षः = कार्यसम्पादनकोष्ठः, काम गर्ने कोठा ( ध्यचपचयक)

पताका = ध्वजः, झन्डा (ँबिन)

अपरस्मिन् = अन्यस्मिन्, अर्को (ब्लयतजभच)

साभिरुचि = उत्सुकतया, चाख मानेर (ध्ष्तज बल ष्लतभचभकत)

राष्ट्रियचिह्नम् = राष्ट्रसूचकलक्षणम्, राष्ट" चिनाउने चिह्न (ल्बतष्यलबि झ्कदझ्कि)

विलक्षणः = अद्भुतः, अनौठो (ग्लष्त्रगभ)

अङ्कनम् = चित्रणम्, चित्र राख्नु (क्ष्ींिकतचबतष्यल)

द्वित्रिकोणात्मकः = द्वाभ्यां भिन्नभिन्नत्रिकोणाभ्यां सहितः, दुई भिन्नभिन्न त्रिकोणले युक्त (द्यष-तचष-बलनभिम)

दुर्हृद् = वैरी, शत्रु (भ्लझथ,ायभ)

सुहृद् = मित्रम्, मित्र (ँचष्भलम)

ब्रह्माण्डः = सकलजगत्, सम्पूर्ण संसार (ग्लष्खभचकभ)

व्यज्यते = द्योत्यते, प्रकट हुन्छ (ःबपभक अभिबच)

नियामकौ = नियमनकारिणौ, नियमन गर्ने (द्विवचन) (त्भनगबितष्लन)

तापत्रयम् = मनुष्यादिकारणैः, विघ्नकारिदेवविशेषैः, शारीरक-मानसिकविकारैश्च उत्पन्नं त्रिविधं दुःखम्, तीन प्रकारको दुःख (ऋूफउयगलम या तजचभभ ु्कभचष्भक)

शीतांशुः = शीतलकिरणः, चिसा किरण (ऋयमि चबथ)

प्रदाह्य = भस्मसात् कृत्वा, डढाएर (द्यथ दगचलष्लन)

युयुत्सुः = युद्धाय इच्छुकः, युद्ध गर्न चाहने (भ्बनभच तय धबच)

दुर्गः = कोट्टः,किल्ला (ँयचत))

अभिकल्पितः = विचारितः, कल्पना गरियो (म्भकष्नलभम)

ध्वजोत्तोलनम् = पताकोत्थापनम्, झन्डा उठाउने काम (ज्यष्कतष्लन या ब ाबिन)

निखिलानाम् = सर्वेषाम्, सबैको (इा बीि)

## अभ्यासः

### श्रवणं भाषणञ्च

१. शिक्षकात् 'नागरिकतायाः प्रमाणपत्रम्' इति पाठं श्रुत्वा कठिनपदानि उच्चारयत ।

२. पदानां द्वौ अंशौ मेलयित्वा वदत

यथा- राष्ट्रिय + ध्वजः = राष्ट्रियध्वजः

| | |
|---|---|
| विस्तृत + परिचयः | साङ्केतिक + चिह्नानि |
| नेपालस्य + अपि | दुर् + हृदाम् |
| वासराः + च | वितरन्ति + इति |
| त्रिकोण + आकारः | गरुड + ध्वजः |
| रामरावणयोः + युद्धे | मल्लकाले + अपि |
| अनन्तरम् + अपि | |

३. एकस्मात् सखिनः श्रुत्वा नेपालीभाषायाः अंशं विलोक्य अर्थं कथयत

कार्यालयः, अनुगच्छति, पताका, विलक्षणः, सुहृदाम्, ब्रहमाण्डः, सम्पाद्यन्ते, त्रिविधम्, युयुत्सुः, ध्वजोत्तोलनम् ।

४. शिक्षकात् श्रुत्वा उच्चैः स्वरेण सखीन् श्रावयत

सर्वकारीयकार्यालयः, जनपदप्रशासनकार्यालयः, प्राप्नुवन्ति, द्वित्रिकोणात्मकः, उदयास्तादिकार्याणि, मास-दिवस-वासराणाम्, प्रदाह्य, आध्यात्मिकेन, पृथ्वीनारायणशाहः ।

५. असमस्तपदम् समस्तपदम् वा इति वदत

यथा- अन्तरम् = असमस्तपदम, अनन्तरमपि = समस्तपदम्

ललितः, कार्यकक्षः, तापः, शीतांशुः, गगनम्, पितृकार्यम्, ध्वजः, कामदेवः, कार्यम्, ग्रहपतिः, एवमेव, महिमा, शुभकरः, राष्ट्रकविः, राष्ट्रम् ।

६. अनुच्छेदे प्रयुक्तान् अबुद्धार्थान् शब्दान् निगदत

अस्माकं राष्ट्रध्वजे संस्कृतिरपि सन्निहिता अस्ति । समयस्य विभाजनं चन्द्रसूर्ययोः गत्या अवस्थया वा निर्धार्यते । चन्द्रस्य गतेः अवस्थायाः वा आधारेण तिथयः निर्धारिताः भवन्ति । सूर्यस्य गतेः अवस्थायाः वा अनुसारेण मासाः, दिवसाः वासराश्च

निश्चीयन्ते । देव-पितृकार्याणि तिथीनामनुसारेण सम्पाद्यन्ते । दैनिकव्यवहारे मास-दिवस-वासराणां गणना भवति । इत्थं चन्द्रसूर्यौ समयस्य संस्कृतेः नियामकौ भवतः ।

## ७. पदानि प्रयुज्य एकैकं वाक्यं श्रावयत

प्रमाणपत्रम्, जनपदः, माता, देवकार्यम्, साभिरुचि, शौर्यम्, अधः, तापत्रयम्, निवारयतः, वीराः, निश्चेतुम्, विस्मयम्, निखिलानाम् ।

## ८. अधो लिखितं वाक्यम् आश्रित्य स्वमतं प्रकटयत

अस्माकं राष्ट्रध्वजः निखिलानां नेपालिनां राष्ट्रभावं निर्वहति ।

## ९. एकपदेन उत्तरं वदत

(क) ललितस्य पुत्रस्य नाम किम् ?

(ख) प्रमाणपत्रम् कः अदात् ?

(ग) नक्षत्रपतिः कः ?

(घ) दुःखं कतिविधम् ?

(ङ) 'मकरध्वजः' इति पदेन कः ज्ञायते ?

(च) राष्ट्रकविः कः ?

## १०. एकवाक्येन उत्तरं श्रावयत

(क) अजयः कस्मिन् विषये पितरं पृच्छति ?

(ख) राष्ट्रियचिह्नानि किं कुर्वन्ति ?

(ग) रक्तरङ्गः केषां प्रतीकं मन्यते ?

(घ) समुद्रः कीदृशः विलोक्यते ?

(ङ) ग्रहनक्षत्राणि कथं तुष्यन्ति ?

(च) सूर्यस्य गतेः अनुसारेण के निश्चीयन्ते ?

(छ) राष्ट्रियध्वजस्य वर्तमानस्वरूपं कदा विकसितम् अभवत् ?

(ज) नागरिकाः कस्य महिमानं गायन्ति ?

## ११. अनुच्छेदस्य सारांशं स्वमातृभाषायां कथयत

विद्वांशः चन्द्रसूर्ययोः ध्वजस्य त्रिकोणाकारस्य च दार्शनिकदृष्ट्यापि व्याख्यां विदधति । जगत्यां प्राणिनः आधिभौतिकेन, आधिदैविकेन,आध्यात्मिकेन च दुःखेन

पीडिताः सन्ति । एतत् तापत्रयम् उच्यते । चन्द्रः शीतांशोः वृष्ट्या प्राणिनां तापं शमयति । सूर्यश्च तं तापं प्रदाह्य प्राणिनः सुखिनः कारयति । एवमेव चन्द्रसूर्यौ ध्वजस्य त्रिकोणात् नेपालिनामपि त्रिविधं दुःखं निवारयतः ।

## पठनम्

१. पाठात् अधो लिखितैः पदैः विरचितम् अनुच्छेदम् अन्विष्य पठत

विलक्षणः, चतुष्कोणात्मकः, अङ्कनम्, द्वित्रिकोणात्मकः, पार्श्वभागे, विशालत्वम्, सुहृदाम्, वैशिष्ट्यम् ।

२. 'राष्ट्रियध्वजः' इति पाठस्य तृतीयानुच्छेदस्य निरवच्छिन्नपठनं कुरुत ।

३. रिक्तस्थानं पूरयित्वा द्रुतं पठत

कस्यापि देशस्य नागरिकाः स्वदेशस्य राष्ट्रध्वजस्य ... गायन्ति । ... राष्ट्रभक्तिं प्रकटयन्ति । विशेषेषु उत्सवेषु ...कुर्वन्ति । अनेन नागरिकेषु ... बलवती भवति । ... राष्ट्रकविना माधवघिमिरेऽभिधेन कविना नाटककारेण च गोपालप्रसादरिमालेन च अस्माकं राष्ट्रध्वजस्य ... वर्णनं विहितमस्ति । वैदेशिकाश्च नेपालस्य राष्ट्रध्वजं विलोक्य विस्मयम् ... । अस्माकं राष्ट्रध्वजः निखिलानां ... राष्ट्रभावं निर्वहति ।

४. अधो लिखितानां प्रश्नानाम् उत्तरदायकम् अनुच्छेदं पठत

(क) किं निश्चेतुं न शक्यते ?

(ख) राष्ट्रध्वजस्य प्रारूपं कदा निर्मितम् आसीत् ?

(ग) राष्ट्रध्वजस्य किञ्चित् परिवर्तनं कदा अजायत ?

(घ) राष्ट्रध्वजस्य वर्तमानस्वरूपं कस्मिन् वर्षे स्वीकृतम् आसीत् ?

(ङ) राष्ट्रध्वजस्य प्रचारः केन सह वृद्धिङ्गतो वर्तते ?

५. मासक्रमं सम्मेल्य पठत

श्रावणमासे नागानां पूजा भवति । पौषमासे ल्होसारपर्व आयोज्यते । आश्विनमासे विजयादशमी समायाति । वैशाखमासे कोकिलः कूजति । भाद्रमासे मोतीजयन्ती आगच्छति । ज्येष्ठमासे धरणी अतीव तप्ता भवति । माघमासे मकरस्नानं विधीयते । फाल्गुनमासे होलिकादहनोत्सवस्य उमङ्गः दृश्यते । आषाढमासे धान्यरोपणं क्रियते । चैत्रमासः वसन्तस्य आगमनकालः वर्तते । मार्गमासे जनकपुरे भव्यमेला लगति । कार्तिकमासे छठपर्वणः उल्लासः वर्धते ।

साउनमा नागको पूजा हुन्छ । पुसमा ल्होसारको आयोजना गरिन्छ । असोजमा दसैं पर्छ । वैशाखमा कोइली कराउँछ । भदौमा मोतीजयन्ती आउँछ । जेठमा पृथिवी अति तातो हुन्छ । माघमा मकरस्नान गरिन्छ । फागुनमा होलिकादहनको उत्सव देखिन्छ । असारमा धान रोपाइँ गरिन्छ । चैत वसन्तको आगमनकाल हो । मंसिरमा जनकपुरमा भव्य मेला लाग्छ । कात्तिकमा छठको उल्लास बढ्छ ।

६. अनुच्छेदं पठित्वा सारांशं प्रकाशयत

## उपायः

प्राचीनकाले ग्रिसदेशे 'डेमोस्थनिज' इति नामकः युवकः आसीत् । स बाल्यकालादेव जिज्ञासुः, गभीरः, अध्ययनशीलश्च आसीत् । तस्य कानिचन मित्राणि आसन् । मित्राणि क्रीडितुम्, भ्रमितुम्, मनो रञ्जयितुञ्च इच्छन्ति स्म । तानि डेमोस्थनिजमपि सहैव नयन्ति स्म । क्रीड नादिकार्येषु तस्य रुचिः नासीत् परं वचो निरुध्य मित्राणां तुष्टये स सहैव गच्छति स्म । मित्राणि दुःखितानि न भवेयुरिति धिया स तत् अकरोत् । स मित्राणां सङ्गत्या लक्ष्यं विचलितमिति अचिन्तयत् । स एकस्मिन् दिने शिरसः चतुर्षु भागेषु केशान् कर्तित्वा गृहम् उपविष्टः आसीत् । प्रतिदिनमिव मित्राणि आगच्छन् । तं दृष्ट्वा तानि चकितानि अभवन् । एकं मुखरं मित्रम् अवदच्च," एष जनः मानसिकविचलनं गतः । अस्य जीवनं व्यर्थम् । अयम् अस्मान् नूनं विकारयिष्यति । अमुम् अद्यैव त्यजाम, केवलं वयं गच्छाम । अस्मिन् सहैव नीते जनान् अस्मान् अपि पागलान् कथयिष्यन्ति । अलं विलम्बेन । " तदुक्त्वा मित्राणि ससम्भ्रमं दूरम् अगच्छन् । ततः स मित्राणां सङ्गतेः मुक्तः अभवत् । ज्ञानार्जनेन, चिन्तनेन,साधनया च स प्रसिद्धः दार्शनिकः अभवत् ।

प्राचीनकालमा ग्रिसमा डेमोस्थनिज नाम गरेका युवक थिए । उनी बाल्यकालदेखि नै जिज्ञासु, गम्भीर र अध्ययनशील थिए । उनका केही साथी थिए । साथीहरू खेल्न, घुम्न र रमाइलो गर्न चाहन्थे । उनीहरू डेमोस्थनिजलाई पनि सँगै लैजान्थे । खेलबाडमा उनको रुचि थिएन तर साथीहरूको खुसीका लागि केही नबोली उनी सँगै जाने गर्थे । साथीहरू दुःखी नहोऊन् भनेर उनी त्यसो गर्ने गर्थे । उनले साथीहरूको सङ्गतले लक्ष्यबाट विचलित भएँ भन्ने सोचे । उनी एक दिन चारपाटा मुडेर घरमा बसे । सधैँझैँ साथीहरू आए । उनलाई देखेर उनीहरू छक्क परे । एक जना बोलक्कड साथीले भनिहाल्यो," यो मान्छे बहुलाएछ । यसको

जिन्दगी खेर गयो । यसले हामीलाई पक्कै बिगार्छ । यसलाई आजै छोडिदिऔँ, हामी मात्र जाऔँ । यसलाई सँगै लैजाने हो भने मानिसले हामीलाई पनि पागल भन्ने छन् । ढिला नगरौँ । " त्यति भनेर साथीहरू हडबडाउँदै टाढा गए । त्यसपछि उनले साथीहरूको सङ्गतबाट छुट्कारा पाए । ज्ञान, चिन्तन र साधनाबाट उनी प्रसिद्ध दार्शनिक भए ।

७. अनुच्छेदं पठित्वा निर्दिष्टान् क्रियाकलापान् कुरुत

## परिवारः

तीर्थयात्रायाः प्रसङ्गो वर्तते । तीर्थस्थलं पर्वतशिखरेऽस्ति । तीर्थयात्रिणः गमनागमनं कुर्वन्तः सन्ति । तेषु कश्चन वयस्कोऽपि शिखरम् आरोहति । शिखरात् एको वृद्धोऽधः आगच्छन्नस्ति । द्वौ परिचयं कुरुतः । वृद्धो वयस्कं पृच्छति," एकाकी एव आगतवान् वा परिवारैस्सह ?" वयस्कः स्फुर्त्या प्रतिवदति,"परिवारैस्सह आगतोऽस्मि । एकाकी तीर्थयात्रा कथं भवति ? " तदवधौ एव वयस्कस्य परिवारस्य सदस्याः अपि आगच्छन्ति । वयस्कः परिचाययति," इयं मम पत्नी । इमे मे द्वे पुत्र्यौ । इमे मे त्रयः पुत्राः । परिवारस्य अन्ये सदस्याः गृहे एव सन्ति । " एवमुक्त्वा वयस्को वृद्धं पृच्छति," एकाकी एव आगतवान् वा परिवारस्य सदस्यै सह ?" वृद्धो वदति," परिवारस्य सदस्यैस्सह आगतोऽस्मि ।" " कुत्र सन्ति ते परिवारजनाः ? अत्र तु न पश्यामि ! " वयस्को वृद्धं वदति । वृद्धः शान्तस्वरेण कथयति," मम परिवारजनाः मयि एव सन्ति । ते न हि गेहे अपि तु देहे वसन्ति । चिन्ता मम पत्नी वर्तते । वुभुक्षा तृष्णा च मम पुत्र्यौ स्तः । मनसि आधिः, शिरसि, उरसि,उदरे च व्याधयो विराजन्ते । तान् मम पुत्रान् जानीहि । कदाचित् ज्वर-काश-प्रतिश्यायातिसाराः महयं स्निहयन्ति । ते मम परिवारस्य अन्ये सदस्याः सन्ति । अहमपि परिवारजनैः परिवेष्टितोऽस्मि । त्वदपेक्षया मम परिवाराः बहवः सन्ति । सज्जन, अतःपरं मा वद माम् एकलम् ।" वृद्धस्य वचनं श्रुत्वा गलितस्फूर्तिः वयस्कः सपरिवारं शिखरम् आरोहति ।

(क) उत्तराणि वदत

(अ) अत्र कयोः वार्ता वर्तते ?

(आ) कस्य परिवाराः अधिकाः सन्ति ?

(इ) वृद्धस्य पुत्राः के ?

(इ) इदं कस्य कथनम् ? - "सज्जन, मा वद माम् एकलम् ।"

(उ) कस्य स्फूर्तिः गलिता ?

(ऊ) अनुच्छेदे सप्तमीविभक्तौ प्रयुक्तानि पञ्च पदानि वदत ।

(ख) शिक्षकस्य साहाय्येन पुस्तिकायां पदानाम् अर्थं विलिख्य पठत

गमनागमनम्, वयस्कः, चिन्ता, बुभुक्षा, प्रतिश्यायः, अतिसारः, स्निह्यन्ति, परिवेष्टितः ।

(ग) द्वौ सखायौ साभिनयं पाठं पठतम् ।

(घ) सन्धिविच्छेदनं कृत्वा पठत

गमनागमनम्, वृद्धोऽधः, आगच्छन्नस्ति, परिवारैस्सह, अहमपि, त्वदपेक्षया ।

तीर्थयात्राको प्रसङ्ग छ । तीर्थस्थल पहाडको शिखरमा छ । तीर्थयात्रीहरू आउजाउ गरिरहेका छन् । तिनमा एक जना अधबैँसे मानिस पनि पहाड चढ्छ । शिखरबाट एक जना बुढो मानिस ओर्लँदै छ । दुई जना परिचय गर्छन् । बुढो मानिसले अधबैँसेलाई सोध्छ, "एक्लै आउनुभएको छ कि परिवारसँग ? " अधबैँसे फुर्तीसाथ जवाफ दिन्छ, " परिवारसँग, एक्लै तीर्थयात्रा कसरी हुन्छ र ? " त्यसै बेला अधबैँसेको परिवारका सदस्य पनि आइपुग्छन् । अधबैँसे परिचय गराउँछ, " यी मेरी पत्नी । यी मेरी दुइटी छोरी । यी मेरा तीन भाइ छोरा । परिवारका अरू सदस्य घरमा छन् । " यति भनेर अधबैँसे बुढो मानिसलाई सोध्छ, " एक्लै आउनुभएको छ कि पविारका सदस्यसँग ? " बुढो मानिस भन्छ, " परिवारका सदस्यसँग आएको छु । " " कता छन् त परिवार ? यहाँ त देख्दिनँ त ? " अधबैँसेले बुढो मानिलाई सोध्छ । बुढो मानिस शान्त स्वरले भन्छ," मेरा परिवार मभित्रै छन् । ती घरमा होइन, शरीरमा बस्छन् । चिन्ता मेरी पत्नी हो । भोक र तिर्खा मेरा दुइटी छोरी हुन् । मनमा आधि र टाउको, छाती र पेटमा व्याधि जमेर बसेका छन् । ती मेरा छोरा हुन् भन्ने बुझ्नुहोस् । कहिलेकाहीँ जरो, खोकी, रुघा र पखालाले मलाई माया गर्छन् । ती मेरो परिवारका अरू सदस्य हुन् । म पनि परिवारले घेरिएको छु । तपाईंका भन्दा मेरा परिवार धेरै छन् । हे सज्जन ! मलाई अबदेखि एक्ले नभन्नुहोस् । " बुढो मानिसको कुरा सुनेर फुर्ती घटेको अधबैँसे सपरिवार पहाड चढ्न थाल्छ ।

८. अनुच्छेदस्य मौनपठनं कृत्वा उचितं शीर्षकं दत्त

संस्कृतवाङ्मये प्राचीनकालात् भाषिकचिन्तनं विहितमस्ति । ऋग्वेदे एव 'चत्वारि वाक्' इति पदं प्रयुक्तमस्ति । अनेन भाषायाः चतस्रः अवस्थाः सङ्केत्यन्ते । ताः इमाः सन्ति – परा, पश्यन्ती, मध्यमा, वैखरी च । इमाः अवस्थाः द्विधा विभक्ताः दृश्यन्ते – निरुक्ता अनिरुक्ता च । या वाणी श्रूयते व्यज्यते च सा निरुक्ता भवति । स्वरव्यञ्जनादिसहिता वाणी निरुक्ता कथ्यते । या वाणी अप्रकटिता अव्यक्ता च अस्ति सा अनिरूक्ता भवति । एतदनुसारेण परा, पश्यन्ती, मध्यमा च अनिरुक्ता उच्यन्ते । वैखरी निरुक्ता निगद्यते । इत्थं वयं यद् ब्रूमः तद् वैखरीवाणी भवति । व्याकरणशास्त्रे भाषिकचिन्तनं विशेषेण विहितमस्ति । योगतन्त्रादिशास्त्राणि अपि वाणीभेदान् चिन्तयन्ति । संस्कृते भाषा अपि दर्शनस्य विषयो वृतोऽस्ति ।

संस्कृत वाङ्मयमा प्राचीनकालदेखि भाषिक चिन्तन गरिएको छ । ऋग्वेदमै ' चत्वारि वाक्' भन्ने पदको प्रयोग भएको छ । यसबाट भाषाका चार अवस्थाको सङ्केत पाइन्छ । ती यी हुन्- परा, पश्यन्ती, मध्यमा र वैखरी । यी अवस्था दुई प्रकारबाट बाँडिएका देखिन्छन् - निरूक्ता र अनिरूक्ता । जुन वाणी सुनिन्छ र व्यक्त हुन्छ त्यो निरूक्ता हुन्छ । स्वरव्यञ्जनले सहित वाणी निरूक्ता भनिन्छ । जुन वाणी अप्रकटित र अव्यक्त छ त्यो अनिरूक्ता हुन्छ । यसअनुसार परा, पश्यन्ती र मध्यमा अनिरूक्ता भनिन्छन् । वैखरी निरूक्ता भनिन्छ । यसरी हामी जे बोल्छौं त्यो वैखरी वाणी हुन्छ । व्याकरणशास्त्रमा भाषिक चिन्तन विशेष रूपबाट गरिएको छ । योग, तन्त्र आदि शास्त्रहरूले पनि वाणीका भेदबारे चिन्तन गरेका छन् । संस्कृतमा भाषा पनि दर्शनको विषय स्वीकृत भएको छ ।

## लेखनम्

१. पाठात् एतैः पदैः निर्मितानि वाक्यानि लिखत

साभिरुचि, परिचाययन्ति, सन्तोषकरः, सन्निहिता, नियामकः, निवारयतः, अभिकल्पितः, ध्वजोत्तोलनम्, विस्मयम् ।

२. कोष्ठकस्य सङ्केतम् अनुसृत्य रिक्तस्थानं पूरयत

(क) ... चिहनानि निर्धारयति । (राष्ट्र-एकवचने)

(ख) राष्ट्रियध्वजः ... निर्मितो वर्तते । (रक्तनीलरङ्ग-द्वितीयाविभक्तौ द्विवचने)

(ग) समुद्रः शान्तः ... । (विलोकयति-कर्मवाच्ये एकवचने)

(घ) चन्द्रसूर्ययोः ...ग्रहनक्षत्राणि तुष्यन्ति । (पूजनम्- करणकारके एकवचने)

(ङ) ... ध्वजाः दृश्यन्ते । (दुर्ग-सप्तमीविभक्तौ बहुवचने)

(च) महाभारते... अयुध्यन्त । (वीर- प्रथमाविभक्तौ बहुवचने)

(छ) जनाः ... प्रकटयन्ति । (राष्ट्रभक्ति- द्वितीयाविभक्तौ एकवचने)

(ज) नागरिकेषु राष्ट्रभक्तिः ... भवति । (बलवान्-स्त्रीलिङ्गे एकवचने)

## ३. परस्परं मेलयत

| 'अ' खण्डः | 'आ' खण्डः |
|---|---|
| गगनम् | माधवधिमिरे |
| उपरिभागे | त्रिविधम् |
| पार्श्वभागे | विशालम् |
| ग्रहपतिः | चन्द्रः |
| दुःखम् | सूर्यः |
| राष्ट्रकविः | नीलरङ्गः |

## ४. श्रुतलेखनम् कुरुत

भगवन्तौ विष्णुः 'गरुडध्वजः', शिवश्च ' वृषभध्वजः' निगद्येते । रतिपतिः कामदेवः ' मकरध्वजः' नाम्ना प्रसिद्धो वर्तते । एतेन प्रमाणेन ध्वजस्य प्रीतिः प्रयोगश्च देवकाले एव आस्तामिति सङ्केतो मिलति । कतिपयानां देवीदेवतानां रथेषु ध्वजः स्थापितो दृश्यते । चित्रेषु रामरावणयोर्युद्धे महाभारतस्य धर्मयुद्धे च वीराः ध्वजं गृहीत्वा युयुत्सवः विलोक्यन्ते । पुरा दुर्गेषु राजप्रासादेषु च ध्वजः स्थाप्यते स्म । ध्वजः गौरवस्य, प्रतिष्ठायाः, परिचयस्य च प्रतीकं मन्यते स्म । अधुनापि अत्र अन्तरं नावलोक्यते ।

## ५. सङ्क्षेपेण उत्तराणि लिखत

(क) राष्ट्रियचिह्नानि किं कुर्वन्ति ?

(ख) नेपालिनां वैशिष्ट्यं किम् ?

(ग) राष्ट्रियध्वजे अङ्किताभ्यां चन्द्रसूर्याभ्यां किं व्यज्यते ?

(घ) समयस्य विभाजनं कथं निर्धार्यते ?

(ङ) विद्वांसः किं कुर्वन्ति ?

(च) ध्वजः केषां प्रतीकं मन्यते ?

(छ) नागरिकेषु राष्ट्रभक्तिः कथं बलवती भवति ?

६. अशुद्धानि वाक्यानि संशोध्य लिखत

(क) अस्माकं ध्वजः सुन्दरम् अस्ति ।

(ख) ध्वजे चन्द्रसूर्यौ अङ्कितौ अस्ति ।

(ग) ध्वजे संस्कृतिर्सन्निहिता वर्तते ।

(घ) रामरावणयोर्युद्धः भयानकम् आसीत् ।

(ङ) राष्ट्रियध्वजः नागरिकेषु राष्ट्रभक्तिः उद्भावयति ।

७. पदानि प्रयुज्य वाक्यनिर्माणं कुरुत

सुलभः,अस्माकम्, केवलम्, अवलम्बनम्, विश्वस्यते, प्रसिद्धिः, वृषभध्वजः, किञ्चित्, दृश्यते, रुचिरम् ।

८. रिक्तस्थाने कोष्ठकात् उचितशब्दं लिखत

| शब्दः | पर्यायवाची | विपरीतार्थी | |
|---|---|---|---|
| देवः | ... | ... | (असुरः/सुरः) |
| शीतः | ... | ... | (शीतलः/तप्तः) |
| प्रधानः | ... | ... | (गौणः/मुख्यः |
| मित्रम् | ... | ... | (वैरी/सुहृत्) |
| युयुत्सुः | ... | ... | (उत्सुकः/ कातरः) |
| रचितः | ... | ... | (ध्वंसितः/निर्मितः) |

९. नेपालस्य राष्ट्रियध्वजस्य चित्रं निर्माय प्रदर्शयत ।

१०. एकेन अनुच्छेदेन नेपालस्य मानचित्रं वर्णयत

(नेपालको चुच्चे नक्साको स्पष्ट चित्र राखिदिने)

## रचनात्मकः अभ्यासः

- प्रदत्तानि सूत्राणि अनुसृत्य लघुप्रबन्धं लिखत
- मेलम्ची-पेयजल-परियोजना
- राष्ट्रियगौरवस्य आयोजना
- पञ्चत्रिंशत् अब्जानि रूप्यकाणि व्ययीभूतानि
- द्वाविंशत्या वर्षैः निर्माणं सम्पन्नम्
- काष्ठमण्डपोपत्यकायाः पेयजलसमस्यायाः समाधानस्य आधारः
- जलवितरणमपि प्रारब्धम्
- २०७८ वैक्रमाब्दस्य आषाढमासे मेलम्चीनद्यां भीषणः जलविप्लवः
- परियोजनायाः भौतिकसंरचनासु महती क्षतिः
- भूस्खलनम् क्षतेः अतिरिक्तं कारणम्
- मार्गाः सेतवश्च क्षतिग्रस्ताः
- हेलम्बु-मेलम्चीप्रभृतिग्रामाश्च ध्वस्ताः
- बहवो जनाः मृताः, विलुप्ताश्च

- शतशो गृहपरिवाराः विस्थापिताः, असाहाय्यञ्च प्राप्ताः
- राष्ट्रस्यैव ध्यानम् आकृष्टम्
- सम्भारोद्धारपुनर्निर्माणकार्येषु तत्परता
- सर्वेषां सहयोगस्य आवश्यकता
- पीडितानां प्रभावितानाञ्च जनानां पुनःस्थापनमपि अत्यावश्यकम्
- शीघ्रं पुनर्निर्माणं सर्वैः अपेक्षितम्

## व्याकरणानुशीलनम्

चित्राणि विलोकयत

हरिणानां समूहः = यूथम् ( तीन ओटा हरिणको चित्र)

युवतीनां समूहः = यौवतम् (तीन ओटी तरुनीको चित्र)

कपोतानां समूहः = कापोतम् ( चार ओटा परेबाको चित्र)

मयूराणां समूहः = मायूरम् ( तीन ओटा मयूरको चित्र)

अजानां समूहः = आजकम् ( तीन ओटा बाख्राको समूह)

हंसानां समूहः = हंसमाला ( पाँच ओटा हाँसको चित्र)

गवां समूहः = गोकुलम् (दुई ओटा गाईको चित्र)

सैनिकानां समूहः = गणः (चार जना सैनिकको चित्र)

पदानां समूहः = समासः (जनपदः, पक्ष-मास-वर्षाणि, ज्वर-कास-प्रतिश्यायातिसाराः)

(द्रष्टव्यः– माथिका सबै चित्र वृत्त वा चारकुनै कोठाभित्र नजिकै पारेर राख्ने)

## समासपरिचयः

द्वयोः द्व्यधिकानां वा पदानां मेलनेन एकपदीभवनं समासः भवति । समसनं सङ्क्षेपीकरणं वा समासः उच्यते । पदानां योजनं समासः तेषां वियोजनं विग्रहः भवति । यथा- जनानां (मानवानां ) पदः (वासस्थानं) = जनपदः ।

समासः षड्विधः भवति । यथा-

### १. अव्ययीभावसमासः

अव्ययशब्दस्य विशेष्यशब्देन सह समसनम् अव्ययीभावसमासः भवति । अत्र पूर्वपदम् अव्ययं भवति, पूर्वपदस्यैव अर्थप्राधान्यञ्च जायते । यथा- वनस्य समीपे =उपवनम्, शक्तिम् अनतिक्रम्य = यथाशक्ति । अस्मिन् समासे समस्तशब्दाः नपुंसकलिङ्गिनः भवन्ति ।

### २. तत्पुरुषसमासः

यत्र पूर्वपदे द्वितीयादिविभक्तयः सन्ति परं परपदे केवलं प्रथमाविभक्तिः विराजते तत्र तत्पुरुषसमासः भवति । अस्मिन् समासे परपदस्य अर्थः प्रधानः भवति । यथा- गृहं गतः = गृहगतः, राज्ञः पुरुषः = राजपुरुषः ।

### ३. कर्मधारयसमासः

विशेष्यपदेन सह विशेषणपदस्य समसनं कर्मधारयसमासः भवति । अस्मिन् समासे विशेषणपदं पूर्वं तिष्ठति । यथा-नीलम् उत्पलम् = नीलोत्पलम्, सुन्दरी बालिका = सुन्दरबालिका, उन्नतं मनः =उन्नतमनः, तत् नगरम् = तन्नगरम् ।

### ४. द्विगुसमासः

पूर्ववर्तिनः सङ्ख्यावाचिशब्दस्य परवर्तिना सुबन्तशब्देन सह समसनं द्विगुसमासः भवति । यथा- पञ्चानां गवां समाहारः = पञ्चगवम्, त्रयाणां लोकानां समाहारः = त्रिलोकी, सप्तानां शतानां समाहारः = सप्तशती ।

### ५. द्वन्द्वसमासः

‘ च ’ इत्यर्थे द्वयोस्तदधिकानां वा पदानां समसनं द्वन्द्वसमासः भवति । अस्मिन् समासे सर्वेषां पदानां अर्थप्राधान्यं भवति । विग्रहवाक्ये प्रतिपदं पश्चात् ‘ च ’ आगच्छति । यथा- हरिश्च हरश्च = हरिहरौ, वृक्षश्च लता च = वृक्षलते, कन्दञ्च मूलञ्च फलञ्च = कन्दमूलफलानि, मृगश्च वराहश्च शशकश्च = मृगवराहशशकाः ।

### ६. बहुव्रीहिसमासः

येषां पदानां समसनं भवति तेषां सर्वेषाम् अर्थ विहाय यत्र अन्यासां व्यक्तीनां वस्तूनां वा

अर्थः बुध्यते तत्र बहुव्रीहिसमासः भवति । बहुव्रीहिसमासेन निर्मिताः सर्वे शब्दाः विशेषणानि भवन्ति । यथा- पीतम् अम्बरं यस्य सः = पीताम्बरः (हरिः), दत्तं धनं यस्मै सः = दत्तधनः (दरिद्रः), सुन्दरी बुद्धिः यस्य सः = सुन्दरबुद्धिः (सज्जनः), निर्मलं जलं यस्मिन् तत् = निर्मलजलम् (सरः), पद्मं नाभौ यस्य = पद्मनाभः ( विष्णुः) ।

## व्याकरणाभ्यासः

### १. समासनामानि वदत

नद्याः समीपम् = उपनदम्, स्नानाय अर्थम् = स्नानार्थम्, कुत्सितः पुरुषः = कुपुरुषः, भीमश्च अर्जुनश्च =भीमार्जुनौ, धनुः पाणौ यस्य सः = धनुष्पाणिः, चतुर्णां युगानां समाहारः = चतुर्युगम्, मतिम् अनतिक्रम्य = यथामति ।

### २. शिक्षकस्य साहाय्येन विग्रहं कुरुत

यथाभक्ति, सुखप्राप्तः, कृष्णसर्पः, त्रिभुवनम्, भूतपूर्वः, हस्तपादम्, जायापती, दण्डपाणिः, नीलाम्बरम् ।

### ३. समस्तपदानि प्रयुज्य एकैकं वाक्यं रचयत

सविनयम्, अनुपस्थितः, कर्णार्जुनौ, जलमग्नः, प्रतिगृहम्, देशान्तरम्, मुखचन्द्रः, पञ्चामृतम्, चन्द्रशेखरः, मातापितरौ, महाबलः ।

### ४. कोष्ठके समस्तपदेषु विद्यमानानां पदानां सङ्ख्यां लिखत

चतुष्पदी ( )
अहोरात्रः ( )
दुग्धदधिघृतानि ( )
अष्टाध्यायी ( )
पञ्चगवधनः ( )
श्वेताम्बरः ( )
द्वित्राः ( )
मनोवाक्कायकर्माणि ( )

जानकीजानिः ( )

देवदानवगन्धर्वाः ( )

## ५. अधस्तनश्लोकम् अनुलिखत

तत्पुरुषोऽव्ययीभावो द्वन्द्वश्च कर्मधारयः ।
बहुव्रीहिर्द्विगुश्चैव समासः षड्विधो मतः ॥

## श्रवणपाठः

नेपालो धार्मिकसांस्कृतिकप्राकृतिकस्थलैः समृद्धं राष्ट्रमस्ति । अत्र बहुषु जनपदेषु मन्दिराणि, शक्तिपीठानि, विहाराः, प्रार्थनागृहाणि च सन्ति । इमाः सम्पदो नेपालस्य धार्मिकसहिष्णुताम्, सांस्कृतिकवैविध्यम्, प्राकृतिकवैलक्षण्यञ्च प्रदर्शयन्ति । एतासु कानिचन उदाहरणानि प्रस्तोतुं शक्यन्ते । ताप्लेजुङजनपदे पाथीभरादेवी विराजते । अस्याः भगवत्याः दर्शनाय प्रतिवर्षं सहस्रशो भक्तजना आगच्छन्ति । सुनसरीजनपदे बुढासुब्बास्थलं प्रख्यातमस्ति । खोटाङजनपदे हलेश (हलेसी) स्थानं विद्यते । अत्रत्ये शिवलिङ्गं गुहा च दर्शनार्थिषु विस्मयमुद्भावयतः । जनकपुरे सुन्दरं जानकीमन्दिरं सुशोभते । अत्रत्या मिथिलाकला चातीव कमनीया विलोक्यते । दोलखाजनपदे कालिञ्चोकभगवती, सिन्धुपाल्चोकजनपदे पलाञ्चोकभगवती च सर्वान् परितः पातः । काष्ठमण्डपोपत्यका कलाधर्मसंस्कृतीनामनावृतं गृहमिव प्रतिभाति । पशुपतिनाथगुह्यकालीदक्षिणकालीप्रभृतिमनोज्ञानि स्थलानि अत्र सन्ति । बौद्धनाथस्वयम्भूनाथौ बौद्धमार्गिणां श्रद्धाविश्वासौ बिभृतः । अत्रैव घण्टागृहं निकषा नेपालीजामेमस्जिदागारे इस्लामधर्मावलम्बिनो धार्मिकग्रन्थं पठन्ति प्रार्थनाञ्च कुर्वन्ति । गोरखाजनपदे गोरक्षकाल्या मनकामनादेव्याश्च मन्दिरे वर्तेते । बुद्धजन्मस्थली लुम्बिनी

विश्वस्य समेषां बौद्धमार्गिणां श्रद्धाभक्त्योः समर्पणस्य केन्द्रमस्ति । पाल्पाजनपदस्य भैरवस्थानं गुल्मीजनपदस्य ह्षिकेशमन्दिरमपि आस्थाकेन्द्रमस्ति । प्युठानजनपदस्य स्वर्गद्वारी स्वर्गस्य द्वारमिव विभाति । डोल्पाजनपदे त्रिपुरासुन्दरीदेवी शक्त्युपासकाः सश्रद्धं पूजयन्ति । हुम्ला-मुगु-जुम्ला-कालिकोटजनपदेषु बहवो बौद्धविहारा विराजन्ते । देशस्य अन्येषु क्षेत्रेष्वपि अज्ञातरत्नराशिरस्ति । इमानि सर्वाणि स्थलानि अस्माकं धार्मिकसांस्कृतिकप्राकृतिकवैभवानि सन्ति । एतानि अस्मान् आसंसारं परिचाययन्ति । अन्यद् धनं क्षयं प्राप्तुं शक्नोति परमेतानि वैभवानि सदैवाक्षयमाश्रयन्ति ।